श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च सम्पदां सर्वथा दुष्टत्वं नास्ति किन्तु निर्मूलनामेवेति निरूप्य सर्वथा दुष्टत्वं दृष्टान्तेनाहुः-मृगतृष्णामिति । दृष्टिमात्रेण सम्पदात्वं वस्तुतस्त्वर्थशून्यत्वात् आपदात्वमेव यथा मरुमरीचिकायां जलबुद्धिः प्रत्युत ग्रीष्मे धावनं कारयन्ती अनर्थहेतुरेव तथापि बालाः विवेकशून्याः युक्त्या बाधितजलदेशेपि तां जलाशयमेव मन्यन्ते एवमयुक्तास्त्वच्चरणारविन्दयोगरहिताः वैकारिकीं नानाविकाररूपां बाधितार्थामपि मायां वस्तु चक्षते नह्यात्मनि विकल्पः नानाविधत्वं वा भवति तथा विकारजातं वस्तुत्वेन मन्यमानः मायामोहित एव भवति ॥ ११ ॥

ननु, भ्रान्तानामेव सम्पदोऽनर्थहेतवः नः युष्माकमित्याशङ्कायामाहुः-वयं पुरेति । श्रीमदेन नष्टा बुद्धिर्येषां वयन्तु सुतरामेव पुरैव नष्टाः यतः अस्याः पृथिव्याः जिगीषया इतरेतरस्पृधो जाताः स्पर्द्धाह्यात्मनो मुख्यो नाशहेतुः न केवलं समानशीलेषु स्पर्द्धैव दोषः । किन्तु तदीयाः प्रजाः अतिनिर्घृणाः सन्तो भ्रान्तो जाताः स्वा अपि प्रजाः दण्डादिभिः प्रभो इति सम्बोधनं तेषामप्रभुत्वं सूचयति ननु राज्यदानसमय एव भगवता राज्यस्थिताः सर्व एव तेभ्यो दत्ता इति स्वकीया यथासुखं कुर्वन्तु को दोष इति चेत्तत्राहुः—त्वां मृत्युं पुरस्थितमविगणय्येति । सहि मृत्युर्भगवान् किमयं करिष्यतीत्यग्रे निवीय तिष्ठति अन्यथा कृते मारयिष्यतीति ज्ञात्वापि तमवगणय्य स्थिताः एवं मतिविभ्रमे हेतुः दुर्मदा इति ॥ १२ ॥

तर्हि भगवान् किमुपेक्षां कृतवान् मारितवान् वा इत्याशङ्कायामाहुः—त एवेति । कृष्णेति स्नेहात् सम्वादेन जातधाष्टर्यानां सम्बोधनम् अथेति नैतत्परोक्षं किं जातमित्याकाङ्क्षायामाह—गम्भीरवीर्येण गभीररयेण कालेन श्रियः सकाशाद्विचालिताः कालस्य सामर्थ्ये तत्र क्लेशाभावे तु हेतुः भवतस्तन्वेति कालं वञ्चयितुं देशान्तरगमनं वारयति—गभीररंहसेति । प्रतीकारं वारयति दुरन्तवीर्येणेति ननु मम तन्वेति कथं निश्चितं तत्राहुः—यतो राज्यभ्रंशानन्तरं भवतोऽनुकम्पया विनष्टदर्पाः गतदोषास्सन्तः चरणौ स्मराम महान्तं गुणं प्राप्ताः यदि भगवानेव तथा न कुर्यात् तदा राज्यभ्रंशे सुतरामेव सद्बुद्धिर्न स्यात् भगवांस्त्वतिकृपालुः अनर्थात्त्याजयित्वा परमार्थे योजितवानिति कार्यानुरोधात् कालस्य तव शरीरत्वमध्यवसीयते ॥ १३ ॥

ननु, दोषसहितानामेव राज्यमनर्थहेतुः, यथा ज्वरसहितानामन्नम् अतः साम्प्रतं दोषस्य निवृत्तत्वात् राज्यं गृह्णन्त्वित्याशङ्कायामाहुः—अथो न राज्यं मृगतृष्णिरूपितमिति । अर्थशून्यमिति यावत् अस्य करणत्वातिदुष्टमित्याह—देहेनोपासितव्यमिति न हि राज्यमात्मना सेव्यं किन्तु देहेनैव देहस्तु विद्यमानदशायां अग्रे च दुष्टमिति दोषद्वयमाह—शश्वत्पतता सर्वदा मृत्युग्रस्तेन रुजां भुवा रोगोत्पत्तिस्थानेन अतः स्वतः परिकरतश्च दुष्टत्वात् वयं न स्पृहयामः एवमैहिकफले दोष उक्तः पारलौकिकेप्याह—क्रियाफलञ्च प्रेत्य न स्पृहयाम इति क्रिया यागादिस्तस्य फलं स्वर्गादिः तदपि प्रेत्यैव मृत्वैव प्राप्तव्यं लोका जातिभ्रंशप्राप्यमपि न मन्यन्ते कथं प्रत्युत प्राप्यं बुधो मन्यते तत्रापि कर्णमात्ररोचनं दूरात्समीचीनमिति श्रूयते नतु समीचीनं स्पर्द्धाऽसूयाभयादीनां तत्रैवाधिक्यात् ॥ १४ ॥

एवमैहिकामुष्मिकफलं वैराग्यं निरूप्य ज्ञानोपदेशे स्वयमधिकारीति ज्ञापयित्वा प्रार्थयते...तन्नः समादिशोपायमिति । चरणस्मरणेनैवैतावद्दूरे समागतमिति निरन्तरस्मरणहेतुमेव प्रार्थयते उपायश्चेत् ज्ञायते तदैव साध्यं स्वाधीनं भवत्यन्यथा येनोपायेन ते चरणाब्जविषयिका मतिर्विरमेत स्वतो मतिस्थानमशक्यमिति वक्तुं तद्विघातकं निर्दिशति अपिसंसरतामिहेति संसृतिरेव जननमरणरूपा भगवच्चरणस्मरणविस्मारिका तर्हि तदभाव एव प्रार्थनीयः स्यात् कथं स्मरणोपायप्रार्थना तत्राहुः—अपीति संसरणं त्वभीष्टं भगवदीयमार्गोपयोगित्वादिति भावः ॥ १५ ॥

एवं प्रार्थयित्वा भगवतः षड्गुणाख्यापकानि नामान्यनूद्य नमस्यन्ति—कृष्णायेति । सदानन्दात्मकत्वात् कालरूपत्वात् वा वैराग्यहेतुः वासुदेवो ज्ञानहेतुः हरिः श्रीहेतुः आद्यं दुःखं श्रियैव गच्छति इति परमात्मा यशोहेतुः सर्वोत्कर्ष एव यशः कारणं प्रणतानां क्लेशनाशे हेतुर्वीर्यं कार्यं गोविन्दम् इन्द्रकृत्वादीश्वरः आदरेण वीप्सा आदरेण नमनं सर्वकार्यसाधकमिति सूचितम् ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च राज्यादिसम्पदः खलु सम्पद एव न भवन्तीत्याहुः—मृगतृष्णामिति । विकाराः शब्दादयो विषयास्तेभ्य उद्भूतां भोगसम्पत्तिं मायां मायिकीम् अयुक्ता अविवेकिनः वस्तु चक्षते यथा मृगतृष्णायां तेज एव उदकं पश्यन्ति तथैव भोगसम्पत्तौ दुःखमेव सुखं पश्यन्तीत्यर्थः ॥ ११ ॥

अत्रोदाहरणान्यस्मदादय एवेत्याहुर्वयमिति । अस्याः पृथिव्याः इतरेतरस्पृधः परस्परं स्पर्द्धमानाः मृत्यु त्वां पुरः अग्रवर्त्तिनम् अविगणय्य पुरा ये वयं दुर्मदा आस्म त एव वयं अद्य इदानीं भवतस्तन्वा तनुरूपेण कालेन श्रियो विचालिता भ्रंशिताः सन्तः भवतोऽनुकम्पया प्राप्तया चरणौ स्मराम प्रार्थनायां लोट् स्मर्तुं कामयामहे । अतो राज्यच्युतिर्भवदनुग्रहहेतुरित्यनुभवामः ॥ १२—१३ ॥

अथो अत एव मृगतृष्णिरूपितं मृगतृष्णावद्भिरेव जनैः रूपितं सुन्दरीकृतं राज्यं न स्पृहयामहे हे क्षितीशान्तस्त्वमार्षं कीदृशं शश्वत् पतता क्षणभङ्गुरेण रुजां भुवा रोगमन्दिरेण देहेन उपासितव्यमिति राज्यस्य दुःखप्रदत्वमेव दर्शितं तर्हि राज्योपगतैर्बहुधनैरश्वमेधादयो यागाः कर्त्तव्यास्तत्राहुः—क्रियाफलं स्वर्गञ्च न स्पृहयामहे कुतः कर्णरोचनं कर्णाभ्यामेव रोचनं तत्र गतस्यापि स्पर्द्धाद्यनपगमेन सुखाभावादिति भावः ॥ १४ ॥

ननु, तर्हि सायुज्यमुक्तिर्दीयते गृह्यतां तत्र नहि महत्याहुः—तमिति । तम् उपायं सम्यक्तया गृहीतुं कर्तुं च शक्यत्वेन आदिश येन स्मृतिर्न विरमेत् इह विविधयोनौ संसरतामपीति

श्रीशुक उवाच ।

संस्तूयमानो भगवान्राजभिर्मुक्तबन्धनैः ।
तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा ॥ १७ ॥

श्रीभगवानुवाच ।

अद्यप्रभृति वो भूपा मय्यात्मन्यखिलेश्वरे ।
सुदृढा जायते भक्तिर्बाढमाशासितं तथा ॥ १८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

न संसारभङ्गे कामना किन्त्वतिलोभ्यायां प्रेमभक्तावप्यतिदैन्योदयेनैव न कामना नापि तदङ्गभूतायां स्मृतावपि किन्तु तस्या उपाये एव तत्रापि देहीत्यप्रयुज्य समादिशत्यनेनापि साक्षात्तत्रापीति भक्त्यधिकारोचितानां निष्कामत्वदैन्यविनयादीनां परमावधिरेव दर्शितः ॥ १५ ॥

अयमयोग्येभ्योऽप्यसभ्यं कृपयैव समादेष्टव्य इति दण्डवद्वनिप्रणिपातपुरस्सरं साष्टाङ्गं नामानि संकीर्त्तयन्तः प्रणमन्ति । कृष्णाय स्वयं भगवते वासुदेवाय सर्व्वजीवेषु कृपयैव वसुदेवात् प्रकटीभूताय । हरये दैत्यादीनामपि संसारदुःखहन्त्रे परमात्मने शान्तभक्तानां परमात्मत्वेन दासादिभक्तानां परमप्रेमास्पदत्वेन च भासमानाय । प्रणतानां साधकभक्तानां भक्तिप्रतिबन्धकक्लेशहन्त्रे गोविन्दाय संप्रत्यस्माकं गाः नयनश्रवण नासादीन्द्रियाणि । सौन्दर्य्यसौश्वर्यसौरभ्यादिसुधाप्रदानार्थं विन्दते प्राप्नुवते तुभ्यं पुनः पुनर्नमामः ॥ १६-१७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु अनित्यासु नित्यतां कुतो मन्यते इत्यत्राज्ञानादित्याहुः मृगतृष्णां तेजः आत्मिकामुदकाशयं मन्यन्ते यथा एवं वैकारिकीं प्रकृतिविकारसम्भूतां मायां शब्दादिविषयरूपाम् अयुक्ता अज्ञाः वस्तु चक्षते नित्यभोग्यं मन्यन्ते ॥ ११ ॥

राज्ययोगस्यानिष्टहेतुत्वं तद्वियोगस्येष्टहेतुत्वमाहुः--वयमिति द्वाभ्याम् । अस्याः भूमेः पुरः पुरस्तात्त्वां मृत्युमविगणय्य पुरा ये दुर्मदाः ॥ १२ ॥

ते एवाद्य विनष्टदर्पास्ते चरणौ स्मराम त्वत्कृपाफलभूता त्वच्चरणस्मृतिर्लब्धेति भावः । कथम्भूताः भवतस्तन्वा भवदधिष्ठितेन कालेन श्रियः राज्यश्रियः विचालिताः ॥ १३ ॥

अत एव अथोऽनन्तरं शश्वत् प्रतिक्षणं पतता क्षीयमाणेन रुजां रोगाणां भुवा च उत्पत्तिस्थानेन देहेन मृगतृष्णिरूपितं मृगतृष्णात्वेन रूपितमुपासितं राज्यं नोपासितव्यं न सेवनीयं किन्तु त्वदाराधनमेवास्माभिर्देहेन कर्त्तव्यमिति भावः । किञ्च हे विभो ! सर्वगतत्वेन सर्वसाक्षिन् ! कर्णरोचनं कर्णयोः रुचिजनकं क्रियाफलं प्रेत्य लोकान्तरं प्राप्य न स्पृहयामहे किन्तु त्वत्प्राप्तिमिति भावः ॥ १४ ॥

अथ चरणौ स्मराम ते इति भगवत्कृपाफलभूतायाः पूर्वोक्तायाः स्मृतेः स्थैर्य्योपायं प्रार्थयन्ते--तन्न इति । तदर्थं नमः कुर्वन्ति कृष्णायेति ॥ १५ ॥

---

भाषा टीका ।

हे प्रभो ! इस भूमि को जीतने की इच्छा करके परस्पर में स्पर्धा करते और श्री मद से नष्टदृष्टि वारे तथा दुष्ट मद वाले हमलोग मृत्यु रूप आपको नहिं गिनकर पहले अपनी प्रजान का नाश करते हुए अति निर्दयी होगए हैं ॥ १२ ॥

हे कृष्ण ! वेहि हमलोग इस समय में गम्भीर वेगवारे दुरन्त पराक्रम वारे आपके शरीर रूप कालने राज्य संपत्ति से चलायमान किये हुए नष्टगर्व वारे होकर आपकी कृपा करके आपके चरणारविन्द के स्मरण करने को प्रार्थना करते हैं ॥ १३ ॥

इसी कारण मृगतृष्णा के समान क्षणभङ्ग तथा अनेक रोगन की उत्पत्ति के स्थान देह से भोग के योग्य राज्य की वाञ्छा हम नहिं करते इसी प्रकार दोनो कर्ण को रोचक और स्वर्गादि लोक को प्राप्त होकर भोग करने के योग्य यज्ञादिक कर्म के फल स्वर्ग सुखकी वाञ्छा भी हम नहि करते ॥ १४ ॥

इस संसार में भ्रमण करने वारे हमको आपके चरणारविन्द की स्मृति का जैसे विच्छेद न होइ उस उपाय का आप उपदेश कीजिये ॥ १५ ॥

परमानन्द स्वरूप सबके बाहिर भीतर व्यापक सब के निन्यता सब के अन्तरात्मा शरणागतों के क्लेश नाशक गौन की प्राप्ति वारे आपके अर्थ बारंबार नमस्कार है ॥ १६ ॥

---

श्रीधरस्वामीकृतभावार्थदीपिका ।

श्लक्ष्णया मञ्जुलया ॥ १७ ॥

यथा भवद्भिराशंसितं तथा बाढं निश्चितं वो मयि भक्तिः जायते जायतामित्यर्थः ॥ १८ ॥

---

दिष्ट्या व्यवसितं भूपा भवन्त ऋतभाषिणः ।
श्रियैश्वर्यमदोन्नाहं पश्य उन्मादकं नृणाम् ॥ १९ ॥
हैहयो नहुषो वेनो रावणो नरकोऽपरे ।
श्रीमदाद्भ्रंशिताः स्थानाद्देवदैत्यनरेश्वराः ॥ २० ॥
भवन्त एतद्विज्ञाय देहाद्युत्पाद्यमन्तवत् ।
मां यजन्तोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्षथ ॥ २१ ॥
सन्तन्वन्तः प्रजातन्तून् सुखं दुःखं भवाभवौ ।
प्राप्तं प्राप्तञ्च सेवन्तौ मच्चित्ता विचरिष्यथ ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे भूपाः ! मद्भजनमेव कर्तव्यमिति भवद्भिर्व्यवसितं कल्पितं दिष्ट्या भद्रम् भवद्भिरुक्तञ्च सत्यमेवेत्याह–भवन्त इति। श्रीश्च ऐश्वर्यञ्च ताभ्यां मदस्तेनोन्नाहमुद्बन्धनं स्वैराचारमित्यर्थः। पश्ये पश्यामि ॥ १९ ॥

तदेवाऽऽह–हैहय इति। हैहयः कार्तवीर्यश्चक्रवर्ती नरेश्वरः पितुः कामधेनुहरणात्परशुरामेण सपुत्रो हतः नहुषः देवेन्द्रतां प्राप्त उन्मत्तः शचीसङ्गाय ब्राह्मणान् शिबिकां वाहयंस्तैरेव ततो भ्रंशितोऽजगरत्वमवाप वेनोऽप्युन्मत्तो ब्राह्मणानाधिक्षिपंस्तैरेव हुङ्कृतैर्हतः रावणो राक्षसेश्वरः सीतामभिलषन् राघवेण हतः नरको दैत्येश्वरोऽदितिकुण्डलाद्याहरणान्मयैव हतः अपरे ऽपि श्रीमदात् स्थानाद्भ्रंशिताः ॥ २० ॥

यदुत्पाद्यं देहादि तदन्तवत् एवं विज्ञाय युक्ता अप्रमत्ताः रक्षथ रक्षतेत्यर्थः ॥ २१ ॥

प्रजातन्तून् पुत्रादिसन्ततीः प्राप्तं प्राप्तं समत्वेन सेवमानाः ॥२२॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सम्यक् तद्भक्तिमात्रापेक्षया स्तूयमानः यतो मुक्तबन्धनैः साक्षात्तादृशतत्कारुण्यानुभवेन जातमहाभक्तिभिरित्यर्थः। श्लक्ष्णया मधुरया गिराऽऽह यतः सर्वत्र करुणः विशेषतः शरणागतवत्सलश्च१७॥

श्रीभगवांस्तु स्वांसिस्तादृशस्मृतिनद्याः परमाश्रयाक्षयिष्णुसरसीरूपा भक्तिरेवानन्तरं सन्तमेव स्फीतीभविष्यतीति सिद्धतया निर्दिशति–अद्यप्रभृतीति । आत्मनि परमात्मनीति प्रेमयोग्यता अखिलेश्वर इति गौरवयोग्यताऽभिहिता तस्माद्भक्तिशब्देनैवोक्तं तद्द्वयमिश्रतायामेव हि तच्छब्दः प्रयुज्यते यथा पञ्चरात्रे–

" माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।
स्नेहो भक्तिरिति प्रोक्तः तया सार्ष्ट्यादि नान्यथा" ॥इति

सुदृढेति भक्तिरस्त्येव किन्तु अद्यप्रभृति सुदृढा विघ्नानवच्छेद्या बाढमतिशयेन जायते सम्प्रत्येव प्रादुर्भविष्यतीत्यर्थः । "वर्त्तमानसामीप्ये वर्त्तमानवद्वा"अत एव विचरिष्यथ वास्यथे(ते)त्यपि वक्ष्यते हे भूपा इति मद्भक्त्या युष्माभिरेव पृथिवी पालितेति भावः । अन्यत्तैः तत्र यथेत्येवपाठस्तत्सम्मतः तस्याशंसितमित्यनेन योजनादिति तथेति पाठस्तु बहुत्र ॥ १८ ॥

भक्तिराढ्यार्थमेव तान् श्लाघमानस्तदुक्तमनुमोदते–दिष्ट्येति। ऋतभाषित्वे हेतुः श्रियेति श्रीर्धनादिसम्पत् ऐश्वर्य्यमिति वक्तव्ये श्रियैश्वर्य्यमिति तन्वादीनां विकल्पेनेषङुवङाविति छान्दसवार्त्तिकात् त्रियम्बकादिवत् ॥ १९ ॥

एते अपरेऽपि देवदैत्यनरेश्वराः ॥ २० ॥

अथ सिद्धायामपि मद्भक्तौ मत्प्रीत्यर्थं धर्मं लोकं च पालयितुमिच्छतो ममाज्ञया यथा स्वं तत्तत्पालनं च करिष्यथेत्यादिशति–भवन्त इति सार्द्धद्वयेन । युक्ता मत्पराः सन्तो लोकसङ्ग्रहार्थैर्यज्ञैरपि मां यजन्तः धर्मेण प्रजा रक्षथ रक्षिष्यन्तीत्यर्थः। टीकायां लोकतया परिणामे लेखकभ्रमादेव रक्षतेति किन्तु रक्षत्वित्येव ज्ञेयं हे भवन्त इति वा समाधेयम् ॥ २१ ॥

किञ्च प्रजातन्तून् सम्यकृतन्वन्तः भवाभवौ सम्पद्विपदौ तेषु च प्राप्तं प्राप्तं यत्तदेवेति समत्वेनेत्येवार्थः । विचरिष्यथ गृहस्थाचारं करिष्यथ कुरुतेत्यर्थः ॥ २२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भवद्भिर्यथा आशंसितं तथा अस्माभिरङ्गीकृतम् * ॥१८–३५॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

संस्तूयमान इति । मुक्तं बन्धनं मागधकृतं यैर्येषां वा तैः राजभिः संस्तुतः करुणः करुणायुक्तः अत एव शरण्यः श्लक्ष्णया मृद्व्या गिरा तान् राज्ञः प्राह ॥ १७ ॥

तदेवाह–अद्येति षड्भिः । आत्मन्यन्तःप्रविश्य धारके अखिलानामीश्वरे प्रशासितरि मयि वो युष्माकमद्यप्रभृति सुदृढा भक्तिर्जायते भविष्यति कथं यथा बाढं साधु यथा तथा आशंसितं समीहितं तथा सुदृढेति सम्बन्धः ॥ १८ ॥

तन्निश्चितमभिनन्दति–दिष्ट्येति । हे भूपाः ! भूतं यथा स्थितं तात्त्विकमिति यावत् तद्भाषन्त इति तथा तैर्भवद्भिर्व्यवसितं निश्चितं दिष्ट्या आनन्दः सम्यगिति यावत् तदेवोपपादयति श्रियैश्वर्याभ्यां यो मदोन्नाहः मदेनोद्बन्धनम् उत्कृतिः तं नृणामुन्मादनं पश्ये पश्यामीत्यर्थः ॥ १९ ॥

तदेवाह–हैहय इति । हैहयः कार्त्तवीर्यः नहुषः नरेश्वरश्चक्रवर्ती एते श्रीमदाद्धेतोः स्थानाद्राज्याद्भ्रंशिताः तावद्धैहयः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पितुः कामधेनुहरणात्परशुरामेण सपुत्रो हतः तथा नहुषो देवेन्द्रतां प्राप्तः उद्वृत्तः शचीसङ्गाय ब्राह्मणान् शिबिकां वाहयन् तैरेव ततो भ्रंशितः अजगरत्वमवाप वेनोऽप्युन्मत्तो ब्राह्मणानधिक्षिपन् तैरेव हुङ्कृतैर्हतः रावणः राक्षसेश्वरः सीताभिलषन् राघवेण सङ्ग्रामे हतः नरकोऽपि दैत्यश्चादितेः कुण्डलाद्याहरणात् मयैव हतः एवमपरेऽपि श्रीमदात्स्थानाद्भ्रंशिता इत्यर्थः ॥ २० ॥

अतो भवन्तो यदुत्पाद्यं देहादि तदन्तवद्विज्ञाय युक्ताः अवहितचेतसो यज्ञैर्मामाराधयन्तः धर्मेण प्रजाः रक्षथ रक्षन्तु इत्यर्थः । मध्यमपुरुष आर्षः ॥ २१ ॥

सन्तन्वन्त इति । प्रजातन्तून् पुत्रपौत्रादिसन्ततीः । सन्तन्वन्तो विस्तारयन्तः भव उत्पत्तिरभवः भवेतरः तदन्यार्थोऽत्र नञ् मरणमित्यर्थः । सुखादिकं प्राप्तं प्राप्तं समत्वेन सेवमानाः मयि विषयभूते चित्तं येषां ते विचरिष्यथ कालं नयतेत्यर्थः ॥ २२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बाढमभिमतमाशंसितमाकाङ्क्षितञ्च जायते "बाढं त्वभिमते भृशे" इति च ॥ १८ ॥

भवतां व्यवसितं दिष्ट्या मङ्गलं तत्र हेतुः भवन्त इति ऋतभाषिणः ब्रह्मवादिनः यथार्थवादिनो वा अनुभावयति श्रियेति यूयं श्रियैश्वर्यमदानामुन्नाहमभिवृद्धिमुन्मादनं बुद्धिभ्रंशकरं पश्यत ॥ १९ ॥

कान् पश्याम इति तत्राह—हैहयेति । ध्वंसिताः भ्रंशिताः ॥ २० ॥

शिन्तयति—सञ्चिन्तयतेति । उत्पाद्यम् उत्पत्तियोग्यम् अन्तवन्नाशवत् ॥ २१

भवाभवौ मङ्गलामङ्गले ॥ २२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो यज्जातं तदाह—स्तूयमानो भगवानिति । महांस्तुतिप्रियो भवत्येव अत उक्तं भगवानिति महद्भिः स्तुतस्तुष्यतीति ज्ञापयितुं राजभिरिति मोचनेन गतार्थतां वारयति मुक्तबन्धनैरिति । सकृत्प्राप्तफलैर्वा, धाष्ट्र्यं क्रोधमकृत्वा वरदाने हेतुः करुण इति । तातेति परीक्षित्सम्बोधनमप्रतारणाय शरण्य इति सत्यस्य सहजो धर्म इति श्लक्ष्णा वाणी श्रवणमात्रेण सुखदात्रीति शब्दोऽपि पञ्चमो विषयो निरूपितः ॥ १७ ॥

> जिज्ञासार्थी तदधिकारे द्वयमस्तीति वै हरिम् ।
> सात्त्विकेभ्यो मुख्यशास्त्रं सगुणप्राह योग्यतः ॥
> स्वकीयान् षड्गुणान् प्राह षड्भिः सर्वत्र दुर्लभान् ॥
> भक्तिदानं बुद्धिशंसे राज्यदोषः कृपा कृतिः ॥
> ऋणत्रयं निराकृत्य तत्र चिन्ता विरागता ।
> एवं धर्मैर्हरिप्राप्तिरिति वाक्यार्थसङ्ग्रहः ॥

जरासन्धवधेन तेषां शरीराणि मोचयित्वा स्तुत्या तुष्ट आत्मनो मोचयति—अद्यप्रभृतीतिषड्भिः । आदौ तैर्यत् प्रार्थितं स्मृतिविच्छेदो माभवत्विति तत्रोत्तरमाह—अद्यप्रभृति वो युष्माकं मयि सुदृढा भक्तिर्जायतामिति अत्यन्तं स्नेह एव नित्यं स्मरणमिति सिद्धान्तः प्रयोजनसाधकत्वं त्वौपाधिकसंस्मरणहेतुः तदप्याह—मयि आत्मनि अखिलेश्वर इति अन्तर्बहिरावश्यकसेव्य इति भूपा इति सम्बोधनं तारतम्यज्ञानार्थं बाढं यथेष्टम् इदं यथा आशंसितं तमेव दत्तं नत्वपूर्वम् ॥ १८ ॥

तर्हि आशंसायां दोषो भविष्यतीत्याशङ्क्य साध्वाशंसितमित्याह—दिष्ट्या व्यवसितं भूपा इति । एतादृशो व्यवसायो न साधारणानां भवति निरन्तरस्मरणोपायप्रार्थनाविषयः किञ्च भवन्त ऋतभाषिणः राज्यस्यानर्थहेतुत्वं भाषणं भवतां मतमन्तःकरणपूर्वकं सत्यमेव यतः अहमपि श्रियैश्वर्यमदोन्नाहं नृणामुन्मादकमेव पश्ये श्रीसहितं यदैश्वर्यं तेन यो मदोन्नाहः मदबन्धनं सर्वदा मदस्थितिः तत् नृणामुन्मादकं भ्रान्तिं जनयतीत्यर्थः ॥ १९ ॥

अत्र प्रमाणमहं पश्य इति । अत एव बहवः मया तस्मान्मदात् त्याजिताः दैत्या इत्याह—हैहय इति । यद्यद्यैव एत एव त्याजिताः स्युः तदा अविवेकदशायां मात्सर्यमपि भवेत् पूर्वमप्येवं भावे तु न दुःखं पञ्चभिः सहितिवत्स दोषः सम्भवति सुतरां तेचेन्महान्तः अतस्तेषां महत्त्वसिद्ध्यर्थं नामानि गृह्णाति हैहयः सहस्रार्जुनः नहुषः ययातिपिता परशुरामेण इन्द्राण्या च भ्रंशितो वेनो ब्राह्मणैः रावणो रामेण नरको मयैव अपरेचैवम्भूताः हिरण्यकशिपुप्रभृतयः शतशः सन्ति श्रीमदात् स्थानाच्च च्याविताः राज्यं शरीरञ्च दूरीकृतमिति देवा नहुषादयः दैत्या हिरण्यकशिपुप्रभृतयः नरेश्वरा अर्जुनादयः चेति त्रिगुणा अपि स्थानभ्रष्टाः क्रियन्ते ॥ २० ॥

अतो मदे सति स्थानभ्रंशो भविष्यतीति निश्चित्य मदं परित्यज्य मदुक्तं कुरुतेत्याह—भवन्त इति । एतत्पूर्वोक्तं भ्रंशरूपमनुभवयुक्तिभ्यां विशेषतो ज्ञात्वा देहादौ वैराग्यं कर्त्तव्यम् इति वदन् प्रथमं देहदोषमाह—देहादिदेहराज्यादिकमुत्पाद्यं केनचिदुत्पाद्य तेन तु नित्यं सहजम् अत एव अन्तवत् नश्वरम् एतत् ज्ञात्वा देहरक्षायां शिथिलप्रयत्नाः सन्तः तेन स्वत एव दैववशाद्विद्यमानेनाध्वरैः यागैः मां यजन्तः धर्मेण प्रजाः रक्षथ राज्ञः प्रजापालनं यज्ञाश्च धर्माः ॥ २१ ॥

साधारणं धर्ममाह—वितन्वन्तः प्रजातन्तूनिति । गृहस्थस्यैवैष धर्मः सर्वत्रैव पुरुषार्थसिद्धिरिति वक्तुं नाश्रमान्तरमुपदिशति—प्रजातन्तून् सन्ततिपरम्परां वितन्वन्तः विशेषेण सम्पादयन्तः तदनन्तरं सुखं दुःखम् उद्भवः अभवो हानिः एतच्चतुष्टयं साध्यसाधनरूपं दैववशात् प्राप्तं प्राप्तं सकृत् क्लेशं प्राप्य निवृत्ते रोगे पुनरागते पूर्वानुभूतदुःखभयात्तन्निराकरणार्थं यत्नः कर्त्तव्य इति सूचयितुं वीप्सा चकारादन्यान्यपि सुखदुःखसाधनानि प्राप्तानि सहते साधनं मच्चित्तानि इति कृष्णोऽस्ति मामकमनेन समीचीनेन चेति निश्चित्य यथाप्राप्तार्थानुभवः कर्त्तव्य इत्यर्थः ॥ २२ ॥

---

उदासीनाश्च देहादावात्मारामा धृतव्रताः ।
मय्यावेश्य मनः सम्यङ्मामन्ते ब्रह्म यास्यथ ॥ २३ ॥

श्रीशुक उवाच ।

इत्यादिश्य नृपान् कृष्णो भगवान् भुवनेश्वरः ।
तेषां न्ययुङ्क्त पुरुषान् स्त्रियो मज्जनकर्मणि ॥ २४ ॥
सपर्यां कारयामास सहदेवेन भारत ।
नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः ॥ २५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हे भूपा इति तत्रः समादिशेति वाक्येनैव मद्भक्तजनस्वभाव-प्रख्यापकेन सर्वा भूरपि मद्भक्तिरीतिसुधावितरणेन पालितेवेति भावः । बाढमिति प्रतिज्ञायां इदमहं प्रतिजाने इत्यर्थः । यथा आशंसितमाकाङ्क्षितं तथा तेनैव प्रकारेण भक्तिः सुदृढा जायते मत्कर्तृक उपायादेशः युष्मत्कर्तृकमुपायज्ञानम् उपायानुष्ठानं ततो दृढा स्मृतिस्तयाच सुदृढेति प्रेमभक्तिरधुनैव चणमात्रेणैवा पायोपेयतद्दार्ढ्यादिकयुक्ता जायते क्रमेणानुभवतेति भावः । अथ प्र ति नित्यनवीनी भवन्तीत्यर्थः ॥१८॥

भक्तिरेव कस्मात्येति यद्यवासितं तद्दिष्ट्या । यतः श्रिया संपत्त्या यदैश्वर्यं तेन यो मदस्तेन योऽग्राहम् उद्बन्धनम उच्छृङ्खलत्व-मित्यर्थः । पश्यत्यार्षम् ॥ १९ ॥

स्थानात् स्वपदात् ॥ २० ॥

किन्तु मदाज्ञया लोकरीतिरेवानुसरणीयेत्याह—भवन्त इति ॥ २१ ॥

प्रजातन्तून् पुत्रादिसन्ततीः । भवाभवौ भूत्यभूती । प्राप्तेच प्राप्तौ चेति प्राप्तम् एकशेषः ॥ २२-२३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्लक्ष्णया मृद्व्या ॥ १७ ॥

हे भूपाः ! यथा भवद्भिराशंसितं समीहितं तथा बाढं निश्चितं वो युष्माकम् आत्मनि सर्वाश्रये मयि सुदृढा सुस्थिरा भक्तिः स्मृतिर्जायते जायताम् ॥ १८ ॥

हे भूपाः ! चरणाब्जयोः स्मृतिर्यथा न विरमेदिति भवद्भिर्व्यव-सितं सङ्कल्पितं दिष्ट्या शोभनमेवेत्यर्थः । किञ्च राज्यैश्वर्यमदोन्नद्धो न श्रेयो विन्दते इत्यादि ऋतं यथा भाषन्ते इति ऋतः भाषिणो यूयं श्रियैश्वर्याभ्यां यो मदस्तेनाग्राहमुद्बन्धनं स्वेच्छाचारं नृणामुन्मादकं पश्ये पश्यामि ॥ १९ ॥

तदेवाह—हैहय इति । तत्र हैहयः परशुरामेण हतः नहुषो मुनिभिः देवलोकात्पातितः वेनो ब्राह्मणैर्हतः रावणो राघवेण हतः नरको मया हतः अपरे देवदैत्यनरेश्वराश्च इन्द्राहिरण्यकशिपु-पौण्ड्रकादयः तत्र स्थानादिन्द्रो बलिना भ्रंशितो हिरण्यकशिपु-पौण्ड्राद्या नृसिंहादिभिर्हताः ॥ २० ॥

रचथ रक्षत ॥ २१ ॥

भवाभवौ पुत्रपित्रादीनामुत्पत्तिविनाशौ ॥ २२ ॥

---

भाषाटीका ।

श्रीशुक उवाच ।

हे तात ! बन्धन से छूटे हुए राजा लोगों से स्तुति को प्राप्त तथा आश्रयण के योग्य करुणावान् भगवान् मधुरबाणी करके उन राजानके प्रति बोले ॥ १७ ॥

श्रीभगवानुवाच ।

हे भूपओं ! आप लोगोंने जैसी प्रार्थना करी तैसेहि हमने अङ्गीकार किया अब से लेकर सर्वान्तर्य्यामी सर्व नियन्ता मेरे विषय में आप लोगोंकी दृढ भक्ति होजावो ॥ १८ ॥

हे भूपओं ! आप लोग सत्यवादीहो इस लिये अपने इस प्रकार का निश्चय किया सो मङ्गल भया और धन कर के ऐश्वर्य्य मदकी वृद्धिको मनुष्यों के कल्याणका प्रति बन्ध करके मै देखता हूं ॥ १९ ॥

सहस्रार्जुन नहुष वेन रावण नरकासुर अन्यभी देवता दैत्य राजा लोग श्री के मदसे राज्य ते भ्रष्ट होगया ॥ २० ॥

हे राजाओं ! उत्पत्तिमान् इस देहादिको नाशवान् जान कर सावधान होकर यज्ञों से मेरा पूजन करते हुए आप लोग धर्म से प्रजानकी रक्षा करो ॥ २१ ॥

सन्तानका विस्तार करत सुख दुःख लाभ अलाभ इन में प्राप्त प्राप्त का सेवन करत् मेरे विषय में चित्त लगा कर विचरोगे ॥ २२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मां ब्रह्म यास्यथ ॥ २३ ॥

स्त्रियश्च तेषां मज्जनकर्मण्यभ्यङ्गस्नानादौ न्ययुङ्क्त ॥ २४-२५ ॥

भोजयित्वा वरान्नेन सुस्नातान् समलङ्कृतान् ।
भोगैश्च विविधैर्युक्तांस्ताम्बूलाद्यैर्नृपोचितैः ॥ २६ ॥
ते पूजिता मुकुन्देन राजानो मृष्टकुण्डलाः ।
विरेजुर्मोचिताः क्लेशात् प्रावृडन्ते यथा ग्रहाः ॥ २७ ॥
रथान् सदश्वानारोप्य मणिकाञ्चनभूषितान् ।
प्रीणय्य सूनृतैर्वाक्यैः स्वदेशान् प्रत्ययापयत् ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सुस्नातान् सम्यगलङ्कृतान् भोगैश्च युक्तान् वरेणान्नेन भोजयित्वा पुनस्तेषां सपर्यां सहदेवेन कारयामास ॥ २६ ॥

ग्रहाश्चन्द्रादयो यथा ॥ २७ ॥

प्रीणय्य नन्दयित्वा ॥ २८—२९ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, तर्हि गृहाद्यासक्त्या श्रीमदेन पुनस्त्वद्भक्तिराहिताः हन्त दुर्गतिं यास्यामः नेत्याह—उदासीना इति । आत्मा एवारामो मत्क्रीडावनं येषां तथाभूताः आत्मनो मम आरामरूपा वा सन्तः तथा धृतं दृढं गृहीतं व्रतं मन्महत्पूजादिनियमो यैस्तथाभूताश्च सन्तो मयि मन आवेश्य सम्यक् सदा सामीप्यादि यथा स्यात्तथा ब्रह्म परब्रह्मरूपं मां यास्यथ ॥ २३ ॥

कृष्णः परमानन्दघनोऽपि तथा भगवान् ब्रह्मादिदुर्लभाज्ञामयपारमैश्वर्य्यादियुक्तोऽपि भुवनैश्वर्य्यलीलाविष्कारकः सन् इति पूर्वोक्तरीत्या नृपानादिश्य पुरुषान् साक्षादभ्यङ्गादौ स्त्रियस्तत्साधनादौ ज्ञेयाः ॥ २४ ॥

सपर्यामिति युग्मकम् । वस्त्रादिभिः सपर्यां कारयामास हे भारतेति श्रीभगवतो दीनवात्सल्येन निजाशारस्तथा प्रहर्षोदयात्, किं कृत्वा कारयामास ? तदाह—भोजयित्वेति । कथम्भूतानित्यत्र क्रमेणाह सुस्नातानित्यादि ॥ २५-२६ ॥

मुकुन्देन सर्वदुःखतो मुक्तिप्रदेन भगवता सह देवादिद्वारा पूजिताः सम्मानिताः सन्तः अत एव मृष्टकुण्डलाः तदुपलक्षितोज्ज्वलसर्वभूषणाः सन्तो विशेषेण पूर्वतोऽप्याधिक्येन रेजुः ॥ २७ ॥

आरोप्य बलात् स्वसाक्षादेवाधिरोप्य सूनृतैरिति भवन्तो मदीयाः अहं च भवदीय एव मत्प्रियतमस्य श्रीयुधिष्ठिरस्य धर्ममहोत्सवो भवद्भिरागम्य शोभनीय इत्यादिप्रियवाक्यैरित्यर्थः । स्वस्वदेशान् प्रति पुनर्जीवयित्वेवाप्रापयत् प्रस्थापयामास श्रीभगवान् ॥ २८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देहादावित्यादिशब्देन तदनुबन्धिनां सङ्ग्रहः उदासीना अहंममतारहिताः आत्मारामाः स्वात्मपरमात्मयाथात्म्यानुलोकनपराः मयि सम्यक् मन आवेश्यान्ते प्रारब्धावसाने ब्रह्म परब्रह्मभूतं मां यास्यथ प्राप्स्यथ ॥ २३ ॥

इतीत्थमादिश्यानुशिष्य तेषां नृपाणां मज्जनकर्मण्यभ्यङ्गस्नानादौ निमित्ते पुरुषान् स्त्रियः स्त्रीश्च न्ययुङ्क्त ॥ २४ ॥

सपर्यामिति । हे भारत ! सहदेवेन जरासन्धसुतेन प्रयोज्यकर्त्रा नरदेवानामर्हैर्वस्त्रादिभिः साधनैः सपर्यां कारयामास ॥ २५ ॥

भोजयित्वेति । वरान्नेन श्रेष्ठान्नेन भुजिकर्मणोऽन्नस्य तत्करणत्वविवक्षायां तृतीया ततः पुनस्ताम्बूलाद्यैर्विविधैर्भोगैर्युक्तान् कारयामासेत्यनुषङ्गः ॥ २६ ॥

त इति । ते राजानः सहदेवेन पूजिताः कृष्णेन क्लेशान्मोचिताः विरेजुः यथा प्रावृडन्ते शरदि ग्रहाश्चन्द्रादयस्तद्वत् ॥ २७ ॥

रथानिति । सन्तः समीचीनाः अश्वा येषान्तान् रथानारोप्य रथेषु उपवेश्य सूनृतैर्मधुरैर्वाक्यैः प्रीणीय हर्षयित्वा स्वस्वदेशान् प्रत्ययापयत् प्रस्थापयामास ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मारामत्वं विवृणोति—मयीति ॥ २३-२५ ॥

भोगैः स्रक्चन्दनादिलक्षणैर्धनैर्वा ॥ २६ ॥

ग्रहाः आदित्यादयः ॥ २७ ॥

प्रीणय्य प्रीतिं जनयित्वा ॥ २८ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं कृते यद्भविष्यति फलं तत्साधनसहितं निर्दिशति उदासीना इति । स्वेषु धनबन्धादिषु देहधर्मादिषु च उदासीनाः भवन्तु मा भवन्त्विति रागद्वेषरहिताः न केवलं बहिर्मुखताभाव एव प्रयोजकः किन्त्वात्मरमणमपि एतदुभयसिद्ध्यर्थं धृतभगवद्व्रताः एवं साधनैर्यावज्जीवमपि सम्यक् मन आवेश्य अन्ते मरणसमये ब्रह्मस्वरूपं यास्यथ गमिष्यथ मध्ये देहनाशार्थं प्रयत्ने देहजीवं निष्ठेत अतो देहान्तस्यैव प्रतीक्षा कर्त्तव्या मत्स्मरणमेव कर्त्तुं शक्यं कार्यसाधकञ्च ततश्च मत्प्राप्तिरेव भविष्यति मम ब्रह्मत्वात् फलं मोक्ष एवेति फलं तत्स्तुतिश्लोका ॥ २३ ॥

एवं निरभिमानस्थितं प्रेमभक्तिं निरन्तरस्मरणम् अन्ते मोक्षञ्च तेभ्यो दत्वा कृतार्थानपि लोकपुरस्कारार्थं लौकिक्या परिचर्यया संस्कृतान् कृतवानित्याह -इत्यादिश्यति त्रिभिः । यतः कृष्णः सदानन्दः भक्तसुखार्थमेव गृहीतावतारः साधनसम्पत्त्यर्थमाह

त एवं मोचिताः कृच्छ्रात् कृष्णेन सुमहात्मना ।
ययुस्तमेव ध्यायन्तः कृतानि च जगत्पतेः ॥ २९ ॥
जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम् ।
यथाऽन्वशासद्भगवांस्तथा चक्रुरतन्द्रिताः ॥ ३० ॥
जरासन्धं घातयित्वा भीमसेनेन केशवः ।
पार्थाभ्यां संयुतः प्रायात् सहदेवेन पूजितः ॥ ३१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भुवनानामीश्वर इति तेषां प्रथमं मज्जनकर्मणि स्नानकर्मणि पुरुषान् स्त्रियश्च न्ययुङ्क्त अश्रमापनोदः पुरुषैः सौष्ठवं स्त्रीभिरित्युभयाविनियोगः अमज्जनकर्मणि मज्जनकर्मणि वा येषु कर्मसु कृतेषु मज्जनममज्जनं वा प्राप्नोति श्मश्रुकर्मोन्मर्दनादिषु मज्जनं तिलकादिष्वमज्जनमिति ॥ २४ ॥

ततस्ते राजानो गृहे समागता इति सहदेवेन जरासन्धपुत्रेण कृतां तेषां सपर्यां पूजां विधिवत्कारयामास भारतेति धर्मकर्मणि विश्वासार्थं पूजायां प्रकारमाह नरदेवोचितैरिति । उत्कृष्टैः कञ्चुकोष्णीषादिभिः भूषणैः कुण्डलादिभिः स्रग्भिः चन्दनादिभिः ॥ २५ ॥

ततो वरान्नेन पक्वेन भोजयित्वा पुनः स्नातं सुस्नातान् समलङ्कृतान् विविधैर्भोगैः नृत्यगीतादिभिर्युक्तान् चकार नृपभोगे प्रथमं ताम्बूलमिति अन्नवस्त्राणां सर्वसाधारणत्वात् अवान्तरभेद एव भवति तत्रापि नृपोचितैः ॥ २६ ॥

भगवत्संस्कृतांस्तान् वर्णयति—ते पूजिता इति । पूर्वमन्यद्वारा संस्कृता अपि वाक्यैरुत्तमपदार्थदानैश्च मुकुन्देन पुनः पूजिताः सर्व एव राजानः मृष्टकुण्डलाः रत्नोज्वलत्कुण्डलाः सन्तः राजलक्षणं प्राप्य विशेषेण रेजुः पूर्वावस्थापेक्षयापि तत्र हेतुः क्लेशाद्विमोचिता इति । क्लेशभोगानन्तरं पुनः संस्कारे अधिका कान्तिर्भवति अत्र दृष्टान्तमाह—प्रावृडन्ते यथा ग्रहा इति । पूर्वापेक्षयापि मेघापगमे ग्रहाः शुक्रादयः सोज्वला भवन्ति वृष्ट्या मेघगत्या च मध्ये स्थिता भूरेणव अपगच्छन्तीति मलिनानां व्यवधायकत्वाभावात् ग्रहा उज्वला भवन्ति एवं पुरुषा अपि भोगेन पापनाशात् संस्कारेण बहिर्मालिन्याभावाच्च भूषणैरत्युज्वला भवन्तीत्यर्थः ॥ २७ ॥

ततो भगवान् स्वसङ्गे समानेष्यतीति शङ्कां वारयितुमाह—रथान् सदश्वानिति ॥ सर्वे रथारूढाः कृताः उत्तमाश्च रथेषु योजिताः तेच रथाः मणिकाञ्चनादिभिर्भूषिताः ततः सूनृतैरपि वाक्यैः तान् नृपान् प्रीणय्य एवं कायवाङ्मनोभिः तान् सर्वात्मना सुखिनः कृत्वा स्वदेशान् तत्तद्देशान् प्रत्ययापयत प्रस्थापितवान प्रत्यापत्तिः निरोधे आवश्यकी सा च गृहस्थितिपर्यन्ता अन्यथा सामिकृता स्यात् ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्त्रियश्च मज्जनकर्मणि अभ्यङ्गस्नानादौ ॥ २४-२६ ॥
ग्रहाश्चन्द्रादयः ॥ २७-३४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नृपोचितैस्ताम्बूलाद्यैर्विविधैर्भोगैर्युक्तान् कारयामासेत्यनुषङ्गः ॥ २६—२७ ॥

सूनृतैः मधुरैर्वाक्यैः प्रीणय्य नन्दयित्वा ॥ २८ ॥

भाषाटीका ।

देह आदि में उदासीन और आत्मा मेंहि रमण करने वारे तथा यमनियमादि व्रत धारण करने वारे मेरे विषय में मनको निश्चल लगाकर शरीर के अन्त में परब्रह्मस्वरूप मोको हि आप लो प्राप्त हो जावोगे ॥ २३ ॥

श्री शुकदेवजी बोले कि अखिल लोक के ईश्वर श्री कृष्ण भगवान् इसप्रकार राजानको आज्ञा कर उनके अभ्यंगस्नान आदिके निमित्त स्त्री और पुरुष को आज्ञा देतेभये ॥ २४ ॥

हे भारत ! श्री कृष्ण भगवान् जरासन्ध के पुत्र सहदेवनसे राजानके योग्य वस्त्र भूषण माला चन्दन करके राजान का अलंकार कराते भए ॥ २५ ॥

इसप्रकार स्नान किये राजान को श्रेष्ठ अन्न से भोजन कराय कर राजान के उचित नाना प्रकार के भोग तथा ताम्बूल आदिसे उनका सत्कार कराते भए ॥ २६ ॥

श्री कृष्ण ने क्लेश से छुडाए तथा सत्कार को प्राप्तभए सुन्दर कुण्डल धारण किये वे राजालोग जैसे वर्षा कालके अन्तमें सूर्यादि ग्रह शोभायमान होते हैं तैसेहि शोभायमान होते भए ॥ २७ ॥

मणि जड़ित सुवर्ण के भूषणों से भूषित राजान को अच्छे २ घोडा जुडे हुए रथों मे बैठाकर मधुर वचनों से प्रसन्न कराय कर उनको अपने २ देशन के प्रति विदा कराते भए ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

जगदुः ऊचुः ॥ ३०—३१ ॥

गत्वा ते खाण्डवप्रस्थं शङ्खान् दध्मुर्जितारयः ।
हर्षयन्तः स्वसुहृदो दुर्हृदां चासुखावहाः ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

खाण्डवप्रस्थमिन्द्रप्रस्थम् ॥ ३२ ॥

शान्तं मृतम् आप्तमनोरथो बभूव ॥ ३३—३५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सुशोभनः महांश्च आत्मा सौन्दर्य्यादिदयालुत्वादिस्वभावो यस्य तेन अतस्तमेव ध्यायन्तस्तथैव चिन्तयन्तः किञ्च जगत्पतेरपि भक्तकृपया कृतानि जरासन्धघातनादीनि च स्वस्नपनादीनि च कर्माणि ध्यायन्तः ॥ २९ ॥

महापुरुषस्य चेष्टितं लोकोत्तरव्यवहारं स्वमोचनादिप्रतिपादनात्तं जगदुः हर्षाकुलैः कीर्त्तयामासुः प्रहर्षस्वभावात् परमाश्चर्य्यात् प्रेमतश्च तत्तु तेषां मन्त्र्यादिष्वपि भगवद्भक्तये जातमिति भावः। किञ्च यथेति भगवान् परमाप्तशिरोमणिरिति तदनुशासने विश्वासः सूचितः अत एवातन्द्रिता अनलसाः सावधानाश्च सन्तः ॥ ३० ॥

केशवः पुनश्चक्रादिधारणवैलक्षण्येन तदाकारस्सन्निति सर्वाविर्भावास्पदता दर्शनेन स्वयं भगवत्त्वमेव दर्शितं प्रायात् जरासन्धस्य दिव्यरथमारुह्य ततः प्रयाणं चक्रे तथा च सभापर्वणि—" जरासन्धरथं कृष्णो योजयित्वा पताकिनम् । आरोप्य भ्रातरौ चैव" इत्यादि किञ्च —

"न ससज्जति वृक्षेषु शस्त्रैश्चापि न हीयते ।
दिव्यो रथवरो राजन् दृश्यते नैव मानुषे ॥
तमास्थाय रथं दिव्यं पर्जन्यसमनिस्वनम् ।
निर्ययौ पुरुषव्याघ्र पाण्डवाभ्यां सहाच्युतः" ॥ इति

तादृशरथादिबहुलरत्नार्पणेन पूजितः सन् ॥ ३१ ॥

शङ्खान् पूर्वं वर्त्मनि स्थापितं स्वरथे स्थितान् दुर्हृदां दुर्योधनादीनाम् ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त इति कृच्छ्रात् क्लेशान्मोचितास्तमेव श्रीकृष्णमेव जगत्पतेः कृष्णस्य कृतानि चेष्टितानि च ध्यायन्तः जग्मुः ययुः ॥ २९ ॥

जगदुरिति । नृपाः महापुरुषस्य श्रीकृष्णस्य चेष्टितं प्रकृतिभ्योऽमात्यादिभ्यो जगदुरूचुः यथा भगवानन्वशासदनुशिष्टवांस्तथा निरवद्याः चक्रुः ॥ ३० ॥

जरासन्धमिति । भीमसेनेन प्रयोज्यकर्त्रा घातयित्वा सहदेवेन जरासन्धसुतेन पूजितः पार्थाभ्यां भीमार्जुनाभ्यां च संयुतः प्रायात् ययौ ॥ ३१ ॥

तत इति । ते कृष्णभीमार्जुनाः खाण्डवप्रस्थम् इन्द्रप्रस्थं गत्वा शङ्खान् ध्मनयामासुः तत्र हेतुः जितारिः शत्रुयैस्ते दुर्हृदाममित्राणामसुखं दुःखमावहन्तीति तथा सुहृदो मित्राणि हर्षयन्तश्च ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृतानि कार्याणि ॥ २९ ॥

प्रकृतिभ्यः विश्वस्तभृत्येभ्यः ॥ ३०—३१ ॥

खाण्डवप्रस्थमिन्द्रप्रस्थं दुर्हृदां शत्रूणाम् ॥ ३२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवत्पुरस्कृतानां स्वदेशगमनमाहन्त एवमिति । लोके ये मोक्ष्यन्ते तेभ्यः प्रत्युत किञ्चिद्गृहीत्वा अगृहीत्वा वा शृङ्खलादिभ्यः केवलं पृथक् क्रियन्ते नत्वेवं सर्वसुखसाधनैः संयुज्यन्ते एते त्वेवं मोचिताः तत्रापि कृच्छ्रात् किञ्चिद्विलम्बे प्रमथनाथाय छिन्ना भवेयुरिति यतः कृष्णेन सदानन्देन मोक्षे मोचकधर्मानुप्रवेशादेवामित्यर्थः । महात्मा परं स्वोपकारव्यतिरेकेणैव परं मुञ्चति अयन्तु सुमहात्मेति स्वतः सर्वदानंदयुक्तः अतस्तमेव ध्यायन्तो ययुः भगवत्कृतानि च सम्माननादीनि एतच्च स्मरणं तेषां युक्तमेव भगवान् भर्त्तेति आवश्यकत्वात् नत्वनेनापि कृतनिष्क्रिया इति ज्ञापयन्नाह—जगत्पतेरिति ॥ २९ ॥

स्वगृहं गताः आश्चर्याभिनिविष्टेभ्यः स्वगृहस्थेभ्यो जगुरित्याह जगदुः प्रकृतिभ्यस्त इति । एवमेव हि महापुरुषचेष्टितं भवतीति महापुरुषस्य भगवतश्चेष्टितं ततो निरभिमानतयैव पालनं कृतवन्त इत्याह—यथान्वशासदिति ॥ ३० ॥

एवं तेषां जीवन्मुक्तावस्थां निरूप्य जरासन्धवधस्य मुक्त्युपयोगित्वमुक्त्वा भक्तिधर्मोपयोगित्वं वक्तुमिन्द्रप्रस्थप्रत्यागमनमुच्यते जरासन्धं घातयित्वेत्यादिपञ्चभिः । भीमसेनकरणेन जरासन्धहननं ब्रह्ममहादेवयोः तद्रक्ष्याभावे हेतुः केशव इति कश्च ईशश्च तयोर्मोक्षदातृत्वादुपजीव्य इति ततः अच्युताभ्यां पार्थाभ्यां संयुतः सन् पितृवधमस्मृत्वापि सहदेवेन पूजितः प्रायात् पूर्ववत् द्वेषं परित्यज्य प्रकर्षेण निर्गत इत्यर्थः ॥ ३१ ॥

एवं समागत्य दूरादेव स्वागमनं ख्यापितवन्त इत्याह—गत्वा ते खाण्डवप्रस्थमिति । इन्द्रप्रस्थनिकटे खाण्डवदाहानन्तरं तत्र नगरं निर्मितमस्ति भगवता कौतुकातिशययुक्तं तत्र गत्वा इन्द्रप्रस्थज्ञापनार्थं शङ्खान् दध्मुः पाञ्चजन्यं हृषीकेश इति श्लोकोक्तान् यतो जितारयः उत्साहेन वादितवन्तः तस्य वादनस्य स्वसुहृदां हर्षजननप्रयोजनं दुर्हृदां दुःखजननञ्च प्रायेण रात्रौ समागताः ॥ ३२ ॥

तच्छ्रुत्वा प्रीतमनस इन्द्रप्रस्थनिवासिनः ।
मेनिरे मागधं शान्तं राजा चाप्तमनोरथः ॥ ३३ ॥
अभिवन्द्याथ राजानं भीमार्जुनजनार्दनाः ।
सर्वमाश्रावयाञ्चक्रुरात्मना यदनुष्ठितम् ॥ ३४ ॥
निशम्य धर्मराजस्तत्केशवेनानुकम्पितम् ।
आनन्दाश्रुकलां मुञ्चन् प्रेम्णा नोवाच किञ्चन ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे
कृष्णाद्यागमनं नाम
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तं कृष्णं कृतानि च ध्यायन्तः ॥ २९ ॥
जगदुः ऊचुः ॥ ३०—३१ ॥
खाण्डवप्रस्थमिन्द्रप्रस्थम् ॥ ३२ ॥

---

भाषा टीका ।

अति उदार चित्त वारे श्रीकृष्णने इस प्रकार क्लेश ते छुडाए भए राजा लोग श्रीकृष्णकाहि ध्यान करत तथा जगत्पालक श्रीकृष्ण के किये चरित्रन का स्मरण करत अपने २ देशको चले गये ॥ २९ ॥

वे राजा लोग अपनी २ राजधानी म जाय कर श्रीकृष्ण के चरित्रको मन्त्रियों के अर्थ कहते भए और जिस प्रकार भगवानने आज्ञा दई रही उसी प्रकार सावधान होकर करते भए ॥ ३० ॥

भीमसेन से जरासन्ध का घात कराय कर और सहदेव से पूजित होकर भीम अर्जुन सहित श्रीकृष्ण भगवान् वहां से पधार गए ॥ ३१ ॥

जरासन्ध के जीतने वारे इसी से दुर्योधन आदिकों दुःख प्राप्त करने वारे वे तीनों इन्द्रप्रस्थ में जाय कर अपने सुहृदनको हर्ष कराने के लिये शङ्ख बजाते भए ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

शान्तं मृतं आप्तमनोरथो बभूव ॥ ३३—३५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तच्छङ्खध्वनिम् ॥ ३३ ॥

अथानन्तरं शङ्खध्वानाव्यवहितकालमेवेत्यर्थः । इत्यत्यन्तवेगेनागमनाद्राज्ञोऽभिगमनाद्यकरणकारणं च सूचितं भगवता पश्चादभिवन्दनं विनयविशेषात् स्नेहविशेषेण तत्र प्रागर्जुनप्रेरणञ्च जरासन्धघातनाद्युपकारेण साधुशिरोमणेर्लज्जया पश्चादवस्थितेश्च अनेनैवाभिप्रायेणोक्तं जनं दुर्जनमर्दयति हिनस्तीति जनार्दन इति आत्मना स्वयमिति समूहापेक्षयैव न तु स्वस्वापेक्षया अनौचित्यात् प्रेम्णा परस्परमानदत्वाच्च अतः परस्परमेव चातुर्यादिकं वर्णितमिति ज्ञेयम् ॥ ३४ ॥

केशवेनेति पूर्ववदश्रुधारणास्थितेः गाम्भीर्य्येणानन्दाश्रूणां कला बिन्दूनेव मुञ्चन् अतस्तद्रुद्धकण्ठत्वेन किं वानौचित्येन नोवाच वक्तुं नाशक्नोत् तत्तत्कुतः प्रेम्णा तच्च कुतः धर्मराजः श्रीभगवद्धर्मे श्रेष्ठ इत्यर्थः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदिति तच्छङ्खध्वननं श्रुत्वा मागधं शान्तं हतं मेनिरे अमन्यन्त राजा युधिष्ठिरस्त्वाप्तः मनोरथो येन तथाभूतश्चासीत् ॥ ३३ ॥

अपि च, अभिवन्द्येति । आत्मना ऽऽत्माभिर्यदनुष्ठितं कृतं तत्सर्वमाश्रावयामासुः ॥ ३४ ॥

निशम्येति । आनन्दाश्रूणां कलाः बिन्दून् मुञ्चन् किञ्चिदपि

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नोवाच तूष्णीमासेत्यर्थः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रिसप्ततितमोऽध्यायः ॥ ७२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शान्तं मृतं प्राप्तमनोरथोऽभूदितिशेषः ॥ ३३—३५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रिसप्ततितमोध्यायः ॥ ७२ ॥

( श्रीविजयध्वजतीर्थरीत्या एकाशीतितमोऽध्यायः ॥ ८१ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधनी ।

यदर्थवादितवन्तस्तज्जातमित्याह—तच्छ्रुत्वेति । इन्द्रप्रस्थनिवासिनः सर्वे प्रीतमनसो जातः शब्दं श्रुत्वैव मागधं शान्तं मेनिरे राजा च प्राप्तमनोरथो जातः॥ ३३ ॥

एवमानन्दयुक्तेषु पुरवासिषु पश्चान्नयनानन्दं दातुं समागतानित्याह—अभिवन्द्याथ राजानमिति । त्रयोपि क्रमेण प्रस्तावानुसारेण वृत्तान्तमाश्रावयाञ्चक्रुः आत्मना भगवता सेन वा वदाप्यर्जुनेन कृतं न स्पष्टं तथापि ग्रासयुद्धादिसम्प्राप्तौ रक्षा तेनैव कृतेति ज्ञातव्यम् अनुष्ठितस्य साधारण्येन निरूपणात् ॥ ३४ ॥

एवं श्रावणे युधिष्ठिरस्य भगवति भक्तिर्जातेत्याह—निशम्येति । यतो धर्मराजः अधिकारी एतत्सर्वं केशवेनानुकम्पितं कृपया कृतमिति ज्ञातवान् नतु स्वभ्रातृपौरुषमिति ततः प्रेमातिशयानन्दाश्रुकणान् मुञ्चन् वाक्स्तम्भे जाते प्रशंसाभिनन्दनादिकं किमपि नोक्तवानित्यर्थः ॥ ३५ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
चतुर्विंशाध्यायविवरणम् ॥२४॥७३॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नोवाचेत्यानन्दजाड्यात् ॥ ३५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रिसप्ततितमोऽध्यायो दशमे ऽजनि सङ्गतः ॥ ७३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्राप्तमनोरथो बभूव ॥ ३३-३५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रिसप्ततितमाऽध्यायार्थप्रकाशः ॥७३॥

---

भाषा टीका ।

शङ्खके शब्द को सुनकर इन्द्रप्रस्थनिवासीजन प्रसन्न मन होकर जरासन्धको शांत मानते भए और राजायुधिष्ठिर भी पूर्ण मनोरथ होगये ॥ ३३ ॥

भीम अर्जुन जनार्दन तीनों राजाको अभिवादन करके जो कुछ आप तीनो ने किया उस सब कर्म को राजाके प्रति सुनाते भए ॥ ३४ ॥

श्रीकृष्ण ने कृपाकरके सम्पादन किये अपने कार्य्य को सुनकर राजा युधिष्ठिर नेत्रों से आनन्द के आंशुपात की बूंद को बहावत प्रेमसे कुछभी नहि बोले ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें बिहत्तरके अध्यायकी
भाषाटीका समाप्ता ॥ ७२ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

## चतुस्सप्ततितमोऽध्यायः ।

### श्रीशुक उवाच ।

एवं युधिष्ठिरो राजा जरासन्धवधं विभोः ।
कृष्णस्य चानुभावं तं श्रुत्वा प्रीतस्तमब्रवीत् ॥ १ ॥

### युधिष्ठिर उवाच ।

ये स्युस्त्रैलोक्यगुरवः सर्वे लोकमहेश्वराः ।
वहन्ति दुर्लभं लब्ध्वा शिरसैवानुशासनम् ॥ २ ॥
स भवानरविन्दाक्षो दीनानामीशमानिनाम् ।
धत्तेऽनुशासनं भूमंस्तदत्यन्तविडम्बनम् ॥ ३ ॥
न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः ।
कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः ॥ ४ ॥
न वै तेऽजितभक्तानां ममाहमिति माधव ।
त्वं तवेति च नानाधीः पशूनामिव वैकृता ॥ ५ ॥

### श्रीशुक उवाच ।

इत्युक्त्वा यज्ञिये काले वव्रे युक्तान् स ऋत्विजः ।
कृष्णानुमोदितः पार्थो ब्राह्मणान् ब्रह्मवादिनः ॥ ६ ॥

---

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्युक्सप्ततितमे राजसूयक्रिया द्विजैः ।
अग्रपूजाप्रसङ्गेन चैद्याघातादि वर्ण्यते ॥
राजसूयमुखे हत्वा जरासन्धं तदन्तरे ।
चैद्यं तदन्तं कुर्वन्तं बीजं कालिमिवावपत् ॥

कृष्णस्य चानुभावमिति चकारात्तस्य स्वाज्ञाऽनुविधायित्वञ्चालक्ष्येत्यर्थः ॥ १ ॥

तदाह--ये स्युरिति । ये त्रैलोक्यस्यापि गुरवः स्युः सनकादयः सर्वे च लोकपालाश्च ते शिरसैव तवानुशासनं वहन्ति दुर्लभं लब्ध्वेति भाग्येनैतल्लब्धमिति बहुमानेनेत्यर्थः ॥ २ ॥

स भवान् परमेश्वरोऽस्माकमनुशासनं धत्ते तदत्यन्तविडम्बनमननुरूपमनुकरणम् स्वतेजोहानिप्रसङ्गादित्यर्थः ॥ ३ ॥

अथवा तव पूर्णस्याज्ञापनाज्ञाधारणाभ्यां न तेजसो हानिवृद्धी अतः कृपया सर्वं सङ्गच्छत इत्याह—न ह्येकस्याद्वितीयस्येति । समानासमानरहितस्य ब्रह्मणस्तवोभयं माया परमात्मन इति सर्वजीवानियन्तुस्तव नियम्यत्वं सुतरां न वास्तवम् अतः परानुग्रहार्थैरेतैः कर्मभिस्तव तेजो न वर्धते न च ह्रसति रवेरिवोदयास्तमयादिकर्मभिरित्यर्थः । तथाच श्रुतिः "न कर्मणा वर्धते नो कनीयान्" इति ॥ ४ ॥

नन्वेवमप्यहं परमेश्वरो ममेनं नार्हं कर्मायोग्यमिति मनसि कथं न भवेदत आह—न वै त इति । हे अजित ! तव भक्तानामेव तावदियं नानाधीर्भेदमतिर्नास्ति यथा पशूनामज्ञानां वैकृता शरीरविषया तव तु नास्तीति किम्पुनर्वक्तव्यमित्यर्थः ॥ ५ ॥

यज्ञिये यज्ञोचिते वसन्तादिकाले युक्तानभियुक्तान् स युधिष्ठिरः ऋत्विजो होतृप्रमुखान् वव्रे वृतवान् ॥ ६ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ततश्च दिनान्तरे तं श्रीकृष्णमब्रवीत् राजेति जरासन्धवधादिना साम्राज्याभिप्रायेण एवमग्रेपि ज्ञेयं जरासन्धवधं श्रीकृष्णस्य भीमाप्यायनादकस्माच्चतुर्भुजत्वाविर्भावनादिलक्षणानुभावात्मकं जरासन्धवधं यद्वा जरासन्धवधं श्रीकृष्णस्य तमनुभावं चेति विभो हे प्रभो! इति तत्पूर्वजेषु तादृशभगवत्कृपास्मृत्या परमादरात् सविसर्गपाठे निजप्रभोः ॥ १ ॥

ये स्युरिति। सर्वानेव परामृशति अनुशासनं तवेति शेषः तच्च साक्षाच्छ्रीमुखेन वेदादिद्वारा वा शिरसैव वहन्ति भक्त्या स्वीकुर्वन्ति ॥ २ ॥

दीनानाम् अकिञ्चनानां बहुधा दुःखितानां वा तथापीशत्वेनाभिमानवतामस्माकं धत्ते पालयति परमादरेण स्वीकरोति वा हे अरविन्दाक्षेति तदानीं कृपामयतत्सौन्दर्य्यानुभवमयप्रेम्णा सम्बोधनं भूमन् हे अपरिच्छिन्नप्रभावेति स्वस्तुतिपोषकत्वेन अतोऽत्यन्तविडम्बनं वयमात्मनो विडम्बनमनधिकारित्वाल्लोकोपहासास्पदत्वमेव मन्यामह इत्यर्थः। यद्वा सर्वथा कर्त्तुमयुक्तमित्यर्थः ॥ ३ ॥

तव तु तेनापि न हानिरित्याह—न ह्येकस्येति। तच्च तैर्व्याख्यातं तत्र सर्वमिति आज्ञापनाज्ञाधारणतेजोवृद्धिहान्यादिकमित्यर्थः। वृद्धिहानी तत्प्राकट्याप्राकट्यार्थे ज्ञेये कृपयैव तत्सङ्गतौ हेतुः नह्येकस्येत्यादि व्याख्यायां समानेत्यादि समानरहितस्येतीश्वरान्तराभावादाज्ञाधारणं न सम्भवति असमानरहितस्येति स्वांशस्वशक्त्यात्मकवस्तुव्यतिरिक्ताराहित्यादाज्ञापना न सम्भवति न हि स्वांशे स्वशक्तौ वाऽऽज्ञापनापेक्षा विद्यते इच्छामात्रेण सिद्धेः तस्मादुभयमाज्ञापनाज्ञाधारणरूपं वस्तुतो न सम्भवति तदसम्भवातिशयार्थं परमात्मन इत्यस्य व्याख्यानं समानासमानराहित्ये हेतुः ब्रह्मण इति सर्वात्मन इत्यर्थः। अतस्तन्मायायैवेति प्राप्ते भक्तेषु कापि व्यानौचित्यात् दुर्घटघटनाकारिण्या कृपामय्या स्वेच्छयैव सम्भवतीति युक्तमेवोक्तम् अतः कृपयेतीति भावः। न वर्द्धते न च ह्रसति किन्तु प्रकटीभवत्यप्रकटीभवति चेत्येवार्थः। तत्र योग्यदृष्टान्तव्याख्या रवेरिति ॥ ४ ॥

न वै इति च तैर्व्याख्यातं परमसौशील्यादेवेतिभावः वैकृतीति विकृतस्य शुद्धस्वरूपगुणविपरीततया परिणतौ यः कुत्सितो देहस्तत्र भवतीति कुत्सितैवेत्यर्थः। वैकृतेति पाठः क्वचित् तस्य तु तदभावकैमुत्ये हेतुः सम्बोधनद्वयं हे अजित! मायावैभवावशीकृत! हे माधव! परमस्वरूपशक्तिपते! इति अथवा न च यज्ञभोक्तुस्तव स्वार्थमेवेदं कर्म यतो न हीयते न च त्वदीयानामस्माकं स्वाभिमानमयमेतत् यतो न वै इति तस्मात्तव कृपैव कारणमस्माकं च भक्तिरेवेति भावः ॥ ५ ॥

अत्र श्रीशुक उवाचेति क्वचित् याज्ञिये काले पूर्वमेव विचार्य्य निर्णीते शुभसमयविशेषे इति पूर्वोक्तमुक्तानिवेद्य ब्रह्मवादिनः पाठतोऽर्थतश्च सदा वेदाभ्यासपरान् ॥ ६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

॥ १–४ ॥

नानाधीः स्वदेहपरदेहतत्सम्बन्धिष्वनात्मभूतेषु अनात्मीयेषु आत्माभिमानात्मीयत्वाभिमानरूपतया नानारूपा धीः ॥ ५–१६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ राजसूययाजनशिशुपालवधात्मकं भगवच्चेष्टितमनुवर्णयति चतुस्सप्ततितमेन—एवमिति। युधिष्ठिरो राजा तं जरासन्धघातनात्मकं कृष्णस्यानुभावं प्रभावं च श्रुत्वा तं श्रीकृष्णमब्रवीत् ॥ १ ॥

उक्तिमेवाह—य इति चतुर्भिः। ये त्रैलोक्यस्यापि गुरवः स्युः सनकाद्यः ये च सर्वे लोकाः जनास्तत्पराश्च ते यस्यानुशासनं दुर्लभं लब्ध्वा भाग्यैरेव तल्लब्धमिति बहुमानेनेत्यर्थः। शिरसा वहन्ति ॥ २ ॥

स भवान् हे अरविन्दाक्ष! ईशमात्मानं मन्यन्त इति तथा तेषां जनानामनुशासनं धत्ते करोतीति यत्तदत्यन्तविडम्बनमनुष्यचेष्टाभिनयमात्रमन्यथा सर्वनियन्तुः सङ्कल्पमात्रकृतजगदुत्पत्तिस्थितिलयस्य तवैतत् साक्षाच्छत्रुविजयादिरूपं कर्म न घटत इति भावः ॥ ३ ॥

ननु प्रभावातिशयार्थमेवाहमपीतरवत्तवानुशासनं कथमित्यत आह—नहीति। एकस्याविभक्तनामरूपचिदचिद्विशिष्टतया जगदुपादानकारणभूतस्याद्वितीयस्य निमित्तकारणस्य च ब्रह्मणस्तदुभयकारणत्वोपयुक्तस्वाभाविकसार्वज्ञ्यसर्वशक्तित्वादिकल्याणगुणबृहत्त्वशालिनः एवं लीलाविभूतिनायकत्वमुक्तम् परमे नित्यविभूत्याख्ये तिष्ठतीति तथा तस्य तव कर्मभिः प्राकृतशत्रुजयादिरूपैस्तेजःप्रभावो न वर्द्धते नापि ह्रसते च यथा रवेरुदयास्तमयादिकर्मभिर्न वर्द्धते न क्षीयते च तद्वत् ॥ ४ ॥

उक्तमेव सहेतुकं कैमुत्यन्यायाभिप्रायेणाह—नचेति। हे माधव! हे अजित! तव भक्तेनामेव पशूनामिव पशुतुल्यानां देहात्माभिमानिनामिव ममाहमिति त्वं तवेति च नानाधीः स्वदेहपरदेहतत्सम्बन्धिष्वनात्मभूतेषु आनात्मीयेष्वात्माभिमानात्मीयत्वाभिमानरूपनानाधीनैव नास्ति कुतः तद्धेतुकतेजोवृद्धिह्रासौ किं पुनस्तव तौ न स्त इतीति भावः ॥ ५ ॥

इतीति। याज्ञिये यज्ञार्हे वसन्तादिरूपकाले स पार्थो युधिष्ठिरः कृष्णेनानुमोदितः युक्तानभियुक्तान् ब्रह्मवादिनः ब्राह्मणानृत्विजो वृतवान् ॥ ६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

श्रोतृमनोहरं क्षमाजनकं वीरवीर्यवर्द्धनं हरेः समद्युतिनिदर्शनं शिशुपालवधं निगदत्यस्मिन्नध्याये, तत्रादौ युधिष्ठिरो भगवन्तं स्तुत्वा तदनुज्ञया राजसूयप्रारम्भणं वक्ति एवमित्यादिना ॥ १ ॥

यस्य तव त्रिलोकगुरवः ब्रह्मादयः ॥ २ ॥

ईशमानिनाम् ईश्वरोऽहमहं भोगीत्याद्यभिमानवतां दीनाना-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मात्मतत्त्वज्ञानाभावात्कोष्ठगत्या कृपणानामनुशासनं दुर्मार्गप्रवृत्तित्यागेन सन्मार्गवर्तनम् ॥ ३ ॥

प्रेक्षावत इव हरेरनुशासनादिप्रवृत्तिः स्वप्रयोजनोद्देशपूर्विकेत्यकृतार्थत्वप्रसङ्ग इति तत्राह—नहीति । तेजः प्रभावलक्षणा प्रभा कर्मभिः शुभाशुभलक्षणैः "न कर्मणा वर्धते नो कनीयान्" इतिश्रुतेः । एकस्यापि समाधिकसद्भावे तौ किं न स्यातामिति तत्राह—अद्वितीयस्येति । अस्यापि परिच्छिन्नत्वे कथमिति मन्दाशङ्कां परिहरति—ब्रह्मणइति । बहिस्तथाऽस्तु अन्तः परिच्छिन्न इति तत्राह—परमात्मन इति । आत्मनो जीवात्परत्वेन पूर्णत्वेन मीयमानस्य परमात्मन इत्यर्थः । रवेः प्रभा मन्दोष्णत्वादिविशेषः कालोपाधिको न स्वाभाविक इति भवत्येव निदर्शनं हरेस्तूक्तविशेषणसामर्थ्यात्सोऽपि नेत्यवगमयितव्यम् ॥ ४ ॥

हरेरद्वितीयत्वं किम्पुनर्न्यायेनाह-नचेति । हे अजित ! माधव लक्ष्मीपते ! ते तव भक्तानां पुत्रादौ ममेति देहादावहमिति देहान्तरे त्वमिति तदीयक्षेत्रादौ तवेति नानाधीर्नास्ति चशब्दः सर्वत्रेश्वरसत्तां पश्यतामित्यस्मिन्नर्थे वर्तते कीदृशी नानाधीः यथा पशूनां संस्काररहितानां बुद्धिर्वैकृता विविधप्रकारा स्वार्थे तद्धितः ॥ ५ ॥

याज्ञिये यज्ञकरणयोग्ये युक्तान्कालपोकन्यायवेदिनः ॥६-९॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १-३ ॥

न च यज्ञभोक्तुस्तव स्वार्थमेवेदं कर्म यतो नहीति । न च त्वदीयानामस्माकं स्वाभिमानमयमेतत् ॥ ४ ॥

यतो नचै इति । तस्मात्तव कृपैव कारणमस्माकञ्च भक्तिरेवेति यद्यपि मेनिरे कृष्णभक्तस्य सूपपन्नमित्युक्तं तथाप्यनैकान्त्यादिति यदुच्यते तत् खलु ब्राह्मणत्वादि व्यावहारमाश्रित्यैव ज्ञेयम् ॥ ५-४४ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—५८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पञ्चाविंशे निरुद्धस्य राज्ञो धर्मो निरूप्यते ।
प्रतिबन्धविहीनस्य प्रेममग्नदचेतसः ॥
आधिदैविकयज्ञोपि धर्मेत्र विनिरूप्यते ।
तत्रापि बाधकं कृष्णो न्यवादयदितीर्यते ॥
मोचनादेव राज्ञां हि तत्सेवात्र निरूपिता ।
ब्रह्मण्यत्वान्मागधस्य ब्राह्मणेष्वत्र संशयः ॥
अतः सर्वत्र ऋषयो निरूप्यन्ते स्वनामतः ।
आधिदैविकयज्ञस्य सर्वोप्युत्कर्ष उच्यते ॥

अध्यात्मिकस्तु तच्छेषः प्रधानार्थो यतः परः ।

पूर्वाध्यायान्ते भक्त्यानन्दपूर्णो जात इति निरूपितम् इदानीं तादृशस्य मनोरथसिद्धिर्निरूप्यते आदौ स भक्तो जात इति वक्तुं पूर्वमाज्ञापनेन भक्ताविरुद्धकारीभूत्वा साम्प्रतं तत्परिहारं कृतवानिति निरूप्यते पञ्चभिः, तत्र दोषपरिहारार्थं प्रथममुद्यममाह—एवं युधिष्ठिर इति । स्वधर्मनिष्ठो महान् भगवदुपकारं श्रुत्वा ज्ञातभगवन्माहात्म्यः विभोः स्वामिनः कृष्णस्य भक्तिरूपं स्वस्मिंश्चानुभावं ज्ञात्वा नारदादिमुखतस्तात्सिद्धीरञ्च श्रुत्वा कृतार्थता जातेति प्रीतस्सन् पूर्वकृतस्वापराधनिवृत्त्यर्थं तं भगवन्तं प्रति किञ्चिदब्रवीदित्यर्थः ॥ १ ॥

आदौ भगवन्माहात्म्यमाह—येस्युरिति । त्रैलोक्यगुरवः त्रैलोक्ये उपदेष्टारः आज्ञापकाः ब्रह्मादयः वेदोक्तऋषयो वा सर्वे च लोकाः प्राणिनो भूराद्यभिमानिदेवा वा सहेश्वरा इन्द्रादिसहिताः एवं वेदलोकपराः भगवतः अनुशासनं स्वस्यानधिकारित्वेन दुर्लभं लब्ध्वा शिरसा वहन्ति अत्यादरेण कुर्वन्तीत्यर्थः ॥ २ ॥

किमतो यद्येवं तदाह—भगवानरविन्दाक्ष इति । सर्वेश्वरः पुरुषोत्तमो भगवान् भक्तानुकम्पार्थमरविन्दाक्षः दृष्ट्यैवाप्यायनकर्त्ता जातः एतादृशः दीनानां शोच्यानां तत्रापीशमानिनां दोषयुक्तानाम् अनुशासनं स्वयं धत्ते तत्कपटमानुषलीलाप्रदर्शनापेक्षयापि अत्यन्तविडम्बनमनुकरणं हीनानुशासनकरणस्यायुक्तत्वं स्थापयित्वा अयुक्तं करोतीत्यप्ययुक्तमिति ॥ ३ ॥

भूयोऽपि तद्युक्तमिति निरूपयति—नह्येकस्येति । यदि बहवो भवन्त्यात्मानः तदा गौणप्रधानभावे अन्यधर्माश्रयणं निषिद्धं भवति एकस्चेत् यद्यन्दस्याप्यधमाङ्गस्य उत्तमाङ्गं सेवां करोतीति यथा पादप्रक्षालनं हस्तेन क्रियते तथा न विरोध इति भगवत एव जगत्येकस्य सत्वान्न विरोधः युक्तिस्तु हिशब्दवाच्या निरूपिता किञ्च यत्र द्वैतमिव भवति तत्र अन्योन्यहीनभावं मन्यते अद्वितीयो भगवानेव सर्वत्र जगति वर्तत इति न भगवति किञ्चिद्दूषणमित्याह—अद्वितीयस्येति । किञ्च जीवानामयं धर्मः यत्कार्यप्रेरणं कार्यकारणञ्चेति नतु ब्रह्मणः शुद्धस्य लीलयान्यधर्मस्वीकारेतु क उत्कर्षापकर्षः इत्याह—ब्रह्मण इति । किञ्च सर्वेषां नियन्ता भगवान् परमात्मा प्रेरकः सर्वानेव यथासुखं सर्वत्र प्रेरयति तत्र किमुत्कर्षमपकर्षं वा सर्वस्यापि भगवदधिष्ठितत्वाविशेषात् अन्यधर्मसम्बन्धेपि न काचित् क्षतिः यथा आकाशे अभ्रतमः प्रकाशाः तद्वद्गणवतीत्याशयेनाह परमात्मन इति अत एव कर्मभिः स्वकीयैः कर्मरूपस्य परकाष्ठापन्नस्य निर्लेपस्य तेजो न वा वर्द्धते न वा ह्रसते अलौकिकत्वात् दृष्टान्तमाह यथा रवेरिति उच्चनीचस्थाने किरणानां सम्बन्धेपि न काचिन्न्यूनता सर्वग्रहसम्बन्धेन न काप्युदयास्तमयौ ॥ ४ ॥

नन्वेवं सति कथं भगवान् सर्वेश्वरत्वमेव मन्यते तेन हीनभावं तथा सति जीवानामपकर्षबुद्ध्या नाशो भविष्यतीति चेत् नहि प्रकृतेपि तथेत्याशङ्कायामाह—नवै ते जितभक्तानामिति । हे अजित ! कस्याप्यवकाशात भक्तानां ममाहमिति स्वाभिमानः कदाचिदपि स्वोत्कर्षख्यापको भवति उत्कर्षस्तु जीवानां पाञ्चभौतिकदेहयुक्तानां लक्ष्मीकृत एव

श्रीमद्वल्लभाचार्यकृतसुबोधनी।

भवति तस्यास्तु त्वमेव धवः अतस्त्वयि को वाऽभिमानी भविष्यति इति भावः । किञ्च त्वद्भक्तानां न कस्मिंश्चिदपि त्रिविधां द्वैतयुक्तानां द्रव्यादिभेदार्थे त्वयीक्षां चकुरित्यर्थः। अभ्युच्छादयामीतिवत् अस्याव्याम प्रत्यय इतिच्छान्दसः यज्ञे यथार्थसमृद्धिमाह—हैमा इति । किलेति लोकोऽत्रप्रमाणं वरुणो निधिपतिरिति सोऽत्र दृष्टान्तीक्रियते पुरेति तस्यापीदानीं दुर्लभ इति सर्वोत्कर्षः देवादयो लोकपालाः द्वीपान्तरस्था राजानश्च नागता भविष्यन्तीति तेषामाकारणमागमनञ्च इन्द्रादय इति विरिञ्चिशिवाभ्यां संयुताः ॥ ५—१३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

चतुर्युक्सप्ततितमे द्विजैर्मखविधौ हरेः।
अग्रपूजा चैद्यवधो दुर्योधनरुडप्यभूत् ॥

जरासन्धवधं कृष्णस्य तमनुभावञ्च ॥ १ ॥

ये त्रैलोक्यस्यापि गुरवस्तेऽपि तवानुशासनमाज्ञां वहन्ति ॥ २ ॥

स भवान् दीनानामतितिकृष्टानामप्यस्माकं यदनुशासनं धत्ते तदत्यन्तविडम्बनमेवास्माकं नतूत्कर्षः । हन्त हन्त परमेश्वरमपि स्वाज्ञाकारिणमिमे कुर्वन्तीति लोकैरुपहस्यामह एवेत्यर्थः ॥ ३ ॥

अस्मद्विधस्यापि जीवस्याज्ञाकारित्वे तव तु न काप्यप्रतिष्ठेत्याह—नहीति । एकस्य ईश्वरान्तराभावात् सजातीयभेदरहितस्य अद्वितीयस्य मायाजीवयोस्त्वच्छक्तित्वेन त्वद्रूपत्वाद्विजातीयभेदरहितस्येति कैवल्याप्रतिष्ठा कर्त्तव्येति भावः । किञ्च ब्रह्मण इति । सर्वव्यापकस्य तव व्याप्यतालक्षणो निकर्षो नास्ति परमात्मन इति सर्वजीवनियन्तुस्तव मादृशजीवनियम्यत्वलक्षणश्च स नास्तीति राज्ञा दैन्येनैव व्यञ्जितं वस्तुतस्तु भक्तवश्यत्वं भगवतो न निकर्षः प्रत्युत कृपाप्रकर्षव्यञ्जकत्वात् सर्वोत्कर्ष एव सच सर्वदा तस्य वर्त्तत एव "दर्शयंस्तद्विदां लोक आत्मनो भक्तवश्यताम्" इत्यादिवचनेभ्यः यथा रवेरिति रविर्हि भूलोके श्वपचगृहमपि प्रकाशयति सुमेरूपरि परमेष्ठिगृहमपि प्रकाशयतीत्यर्थः ॥ ४ ॥

नन्वेवमप्ययं परमेश्वरो ममेदं नर्चि कर्म अयोग्यमिति मनसि कथं न सम्भवेदत आह—नेति । हे अजित ! तव भक्तानामेव तावत् ममाहमिति मम महापापिष्ठस्यमतोऽहं सर्वश्रेष्ठः कस्यापि प्रद्वामि त्वं तवेति तव शास्त्रज्ञानाभावात्त्वं मूर्खः सर्वस्यैव दास्यं कुर्विति पशूनामिव वैकृता वैकृतीतिच पाठः विकारमयी प्राकृती नानाधीर्नास्तीति तेन सिद्धानां तेषां चिन्मयी सात्वस्त्येवेति भावः । तवतु किं पुनर्वक्तव्यमस्तीति भावः ॥ ५ ॥

वव्रिये यज्ञोचिते वसन्तादौ ॥ ६—११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अथ चतुस्सप्ततितमे भगवतो भक्तयज्ञप्रवर्त्तकत्वाग्रपूज्यत्वयज्ञयजमानयज्ञपुरुषविद्विड्घातकत्वं वर्णयति—एवमिति । जरासन्धवधात्मकं कृष्णस्य अनुभावं चकारात् स्वाज्ञानुविधायित्वं चालक्ष्य ॥ १ ॥

अनुशासनमाज्ञाम् ॥ २ ॥

स भवान् दीनानामत्यन्तनिकृष्टानामस्माकमनुशासनं यद्धत्ते तदत्यन्तं विडम्बनं मनुष्यचेष्टानुकरणं तत्वस्तुत्कर्षसूचकमित्यर्थः ॥ ३ ॥

किञ्च एकस्याद्वितीयस्य निस्समानातिशयस्य ब्रह्मणः बृहत्स्वरूपादेः अत एव परमात्मनः तेजः कर्मभिः शत्रुवधादिभिः न वर्द्धते स्वभक्ताहिताचरणादिरूपैः कर्मभिश्च न ह्रसते यथा शीतादिनिराकरणकर्मभिः लोकहिताचरणकर्मभिश्च रवेस्तेजो न वर्द्धते नापि ह्रसतेच तद्वत् ॥ ४ ॥

तेजो हानिवृद्धी नानाभिमानवतां भवतः तथा त्वं तु तव भक्तानामपि नास्ति तव नास्तीति किमुत वक्तव्यमित्याह नवै इति ॥ ५ ॥

वव्रिये वसन्तादिकाले वव्रे वृतवान् ॥ ६ ॥

---

भाषा टीका।

श्री शुक उवाच।

राजा युधिष्ठिर इसप्रकार जरासन्ध के बध को सुनकर और सर्व व्यापक श्री कृष्ण के उस प्रभाव को सुनकर पश्चात् प्रसन्न होकर श्री कृष्ण के प्रति बोले ॥ १ ॥

युधिष्ठिर उवाच।

जो त्रिलोकी के पूज्य ब्रह्मादिक और लोकन के नियन्ता इन्द्रादिक लोकपाल हैं सो परन्तु वे सब आपकी आज्ञा को दुर्लभ मानिकर शिर से धारण करते हैं ॥ २ ॥

हे भूमन् ! सो आप अनन्त महिमा वारे कमलनेत्र वृथाहि अपने को ईश्वर मानने वारे हम दीन दीन आज्ञा को धारण कहारे सो यह मनुष्य चेष्टा करने आपके किसी प्रकार से अनुरूप न हि है ॥ ३ ॥

तथापि समान तथा अधिक रहित और अन्य की समानता रहित स्वरूप गुण करके सबसे बडे सबके आत्मा आपके के तेज की किसी कर्म से वृद्धि भी नहि होती और न किसी कर्म हानि होती है जैसे सूर्य के तेज की हानि वृद्धि नहि होती ॥ ४ ॥

हे अजित ! हे माधव ! आपके भक्तनकों देह आदि मे यह मेरो है यहमै हुं इसप्रकार की अहंकार ममकार बुद्धि नहि होती और यह तूहै यह तेरो है इस प्रकार पशुन के समान नाना बुद्धि नहि होती ॥ ५ ॥

राजा युधिष्ठिर ऐसा कहकर श्री कृष्ण से अनुमति पायकर यज्ञ के योग्य वसन्त काल में वेदवादी यज्ञके योग्य ऋत्विज ब्राह्मणों का वरण करतो भयो ॥ ६ ॥

द्वैपायनो भरद्वाजः सुमन्तुर्गौतमोऽसितः ।
वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवषस्त्रितः ॥ ७ ॥
विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः ।
पैलः पराशरो गर्गो वैशम्पायन एव च ॥ ८ ॥
अथर्वा कश्यपो धौम्यो रामो भार्गव आसुरिः ।
वीतिहोत्रो मधुच्छन्दा वीरसेनोऽकृतव्रणः ॥ ९ ॥
उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः ।
धृतराष्ट्रः सहसुतो विदुरश्च महामतिः ॥ १० ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यत्र दिदृक्षवः ।
तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप ॥ ११ ॥
ततस्ते देवयजनं ब्राह्मणाः स्वर्णलाङ्गलैः ।
कृष्ट्वा तत्र यथाम्नायं दीक्षयाञ्चक्रिरे नृपम् ॥ १२ ॥

श्रीधरस्वामीकृतभावार्थदीपिका ।

तानाह—द्वैपायन इति त्रिभिः ॥ ७—८ ॥

अकृतव्रणान्तानेतानृत्विगुपद्रष्ट्रादिभेदेन वव्रे ॥ ९ ॥

अन्ये चोपहूता यज्ञदिदृक्षवस्तत्रेयुरित्यन्वयः ॥ १०—११ ॥

देवयजनं यज्ञभूमिं कृष्ट्वा कर्षणादिभिः संशोध्य दीक्षयाञ्चक्रिरे दीक्षासंस्कारयुक्तमकुर्वन् ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

द्वैपेति त्रिकम् । द्वैपायनादीनां मुख्यत्वादेत एव वृताः नत्वन्ये इत्येवकारार्थः चकारः प्रत्येकमुक्तसमुच्चये तत्र, सर्वमुख्यो ब्रह्मा द्वैपायनः तथा च सभापर्वणि स्वयं "ब्रह्मत्वमकरोत् तत्र सत्यवतीसुतः" इत्यादि ॥ ७—९ ॥

उपेति युग्मकम् । अन्ये च ऋषयः द्रोणादयश्च तथा तेनोक्तेन श्रीकृष्णानुमोदनप्रकारेणैव हस्तिनापुरे श्रीनकुलं प्रेष्य उपहूताः आमन्त्रिताः आदिशब्दाद्बाह्लीकसोमदत्तादयः महामतिरिति ऐहिकपारलौकिकसर्वधर्मविदित्यर्थः । तथा च तत्रैव "तत्र व्ययकरश्चासीद्विदुरः सर्वधर्मवित्" इति ब्राह्मणाह्वानञ्च यथा तत्रैव श्रीयुधिष्ठिराज्ञया श्रीसहदेववाक्यम्—

आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान् क्षत्रियानपि ।
विशश्च मान्यान् शूद्रांश्च सर्वानानयतेति च ॥

इति ॥ १०—११ ॥

यथाम्नायं वैदिकविध्यनुसारेण अस्योभयतोऽप्यन्वयः ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तानेव निर्दिशति—द्वैपायन इति त्रिभिः । अकृतव्रणान् एतान् ऋत्विगुपद्रष्ट्रादिभेदेन वव्र इति सम्बन्धः ॥ ७—९ ॥

उपहूता इति अन्यच, द्रोणादयः उपहूतास्सन्तो यज्ञं द्रष्टुमिच्छवः तत्रेयुराजग्मुरित्यन्वयः ॥ १०—११ ॥

तत इति । देवयजनं देवा इज्यन्तेऽस्मिन्निति तद्यज्ञभूमिं स्वर्णमयैर्लाङ्गलैर्हलैः कृष्ट्वा कर्षणादिभिः संशोध्य नृपं युधिष्ठिरं दीक्षासंस्कारयुक्तमकुर्वन् ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपहूता मुनयः यथान्ये अनुपहूता अपि तत्राजग्मुः तत्र द्रोणादयोऽप्युपहूताः ॥ १०—११ ॥

यत्र यज्ञकरणमभीष्टतमं तद्देवयजनं स्वर्णलाङ्गलैः सुवर्णमयहलैः कृष्ट्वोल्लिख्य संशोध्य शालां कृत्वा तत्र यथाम्नायं नृपं दीक्षयाञ्चक्रुरित्यन्वयः ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

देवयजनं यज्ञभूमिं कृष्ट्वा कर्षणादिभिः संशोध्य दीक्षयाञ्चक्रिरे दीक्षासंस्कारयुक्तमकुर्वन् ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तान्निर्दिशति-द्वैपायन इति त्रिभिः ॥ ७—९ ॥

अन्ये उपहूताः यज्ञदिदृक्षवस्तत्रेयुरिति द्वयोरन्वयः ॥ १०—११ ॥

हैमाः किलोपकरणा वरुणस्य यथा पुरा ।
इन्द्रादयो लोकपाला विरिञ्चिभवसंयुताः ॥ १३ ॥
सगणाः सिद्धगन्धर्वा विद्याधरमहोरगाः ।
मुनयो यक्षरक्षांसि खगकिन्नरचारणाः ॥ १४ ॥
राजानश्च समाहूता राजपत्न्यश्च सर्वशः ।
राजसूयं समीयुः स्म राज्ञः पाण्डुसुतस्य वै ॥ १५ ॥
मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः ।
अयाजयन् महाराजं याजका देववर्चसः ।
राजसूयेन विधिवत्प्राचेतसमिवामराः ॥ १६ ॥
सुत्येऽहन्यवनीपालो याजकान् सदसस्पतीन् ।
अपूजयन् महाभागान् यथावत् सुसमाहितः ॥ १७ ॥
सदस्याग्र्यार्हणार्हं वै विमृशन्तः सभासदः ।
नाध्यगच्छन्ननैकान्त्यात् सहदेवस्तदाऽब्रवीत् ॥ १८ ॥

श्रीमद्वल्लभाचार्यकृतसिद्धान्तप्रदीपः ।

देवा इज्यन्ते यत्र तद्देवयजनं यज्ञस्य स्थलं कृष्ट्वा कर्षणादिना शोधयित्वा ॥ १२ ॥

---

भाषा टीका ।

व्यास भरद्वाज सुमन्तु गौतम असित वशिष्ठ च्यवन कण्व मैत्रेय कवष त्रित ॥ ७ ॥

विश्वामित्र वामदेव सुमति जैमिनि क्रतु पैल पराशर अथर्वा कश्यप धौम्य परशुराम भार्गव असुरि वीतिहोत्र मधुच्छन्दा वीरसेन अकृतव्रण इतने ऋषियों यज्ञ कराने वाले ऋत्विज वरण किए गए रहे ॥ ८।९ ॥

हे नृप ! इनके सिवाय अन्य भी बुलाए गए द्रोणाचार्य भीष्म कृपाचार्य से आदि लेकर तथा पुत्रन सहित धृतराष्ट्र महा बुद्धिमान विदुर ॥ १० ॥

ब्राह्मण क्षत्रिय वैश्य शूद्र तथा सब [illegible] लोग और राजान के मन्त्रि लोग ए सब यज्ञ के दर्शन करने की इच्छा करके आवते भए ॥ ११ ॥

उसके पश्चात वे ब्राह्मण लोग सुवर्ण हलन करके यज्ञ भूमि को जीत कर वहां विधि के अनुसार राजा युधिष्ठिर को दीक्षा करते भए ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपकरणा उपस्कराः वरुणस्य राजसूये यथा आसन्निति शेषः । किञ्च इन्द्रादयो देवगणाः ॥ १३—१५ ॥

ये च राजादयः समाहूतास्तत्र समीयुः स्म ते सर्वे श्रीकृष्णभक्तस्य पाण्डुसुतस्य राज्ञो युधिष्ठिरस्य राजसूयमविस्मिताः सन्तः सूपपन्नं सुसम्पन्नं मेनिरे इत्यन्वयः ॥ १५ ॥

याजका ऋत्विजः ॥ १६ ॥

सुत्येऽहनि सोमाभिषवदिने ॥ १७ ॥

अग्र्यार्हणमग्रपूजा तस्यार्हं योग्यम् अनैकान्त्याद्योग्यानां बहुत्वेनैकस्यानिश्चयात् ॥ १८—१९ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हैमा इत्यर्द्धकम् । उपकरणा उपकरणानि यज्ञपात्रादीनि किल निश्चये अत्रासम्भावनां माकुर्विंत्यर्थः । इन्द्रेति त्रिकम् विरिञ्चिभवाभ्यां संयुता इति तयोस्तेषु यथा प्राधान्यम् ॥ १३ ॥

तथा सगणा इत्यत्र सगणानामपि सूचितं गणाः श्रीगरुडादयो वैकुण्ठपार्षदाः मुनयः आत्मारामाः श्रीसनकादयः खगाः श्रीगरुडपुत्रादयः चकारात् ब्राह्मणादयश्च सम्यक् स्वस्वगुणप्रदर्शनादिना ईयुः स्म हर्षे वै निश्चये मनने हेतुः पाण्डुसुतस्य सुतरूपेण स्वेन तद्यशोविस्तारकस्येत्यर्थः । तत्रापि कृष्णस्य स्वयं भगवतो भक्तस्येति अत एवाविस्मिता आश्चर्य्यबुद्धिरहिताः देवादधिकं वर्चो दीधितिर्येषां ते व्यासादयः मध्यपदलोपीसमासः अमराः देवर्षयः इहाम्नायं प्राचीना सा परिपाटी यथाऽन्यत्र श्रुतास्ति तथैवात्र ज्ञेयेति सङ्क्षेपार्थो दर्शितः ॥ १४—१६ ॥

सदसस्पतीन् सभाश्रेष्ठान् यतो महाभागान् परमपुण्यवतः यथावत्तद्योग्यमेवापूजयत् यतः अवनीपालः दिग्विजयादिना पृथ्वीपतिः सुसमाहितः श्रद्धादिमांश्चेति ॥ १७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ते महाप्राज्ञा अपि वै निश्चये विशेषेणामृशन्तो विचारयन्तोपि नाध्यगच्छन् न निश्चेतुं शेकुः कुतः अनैकान्त्यात् तत्राज्ञाः खलु देनानासन्देहास्पदत्वात् विज्ञाश्च तस्याश्चर्यादिसम्वलितसभाया नानामतत्वेन विवादापत्तेः स्वीकृतचरणक्षालनाधिकारस्य श्रीभगवत इच्छान्यथापत्तेश्चेति क्षियं सह देवस्तद्वाग्रश्रीविति तु सहदेवस्तु पूजायामिति वक्ष्यमाणानुसारेण तत्र प्राप्ताधिकारत्वादैकान्त्याच्चेति भावः ॥ १८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सुत्येऽहनि सोमाभिषवदिने ॥ १७—१८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स पुरा पूर्वकाले यथा वरुणस्य तद्वदस्यापि उपकरणाः हेममया आसन्निति शेषः तृतीयान्तपाठे हैम्यैर्यैः प्रावर्ततेति शेषः ब्रह्मरुद्राभ्यां संयुता इन्द्रावया देवगणाः ॥ १३ ॥

येच समाहूताः राजानः तेषां पत्न्यश्च तत्र समीयुः ॥ १४ ॥

ते सर्वे कृष्णभक्तस्य पाण्डुसुतस्य राज्ञः राजसूयं सुसत्रम् मेनिरे इत्यन्वयः । अयाजयन्निति देवानामिव वर्चो येषां ते याजका ऋत्विजः देवाः प्राचेतसं वरुणमिव महाराजं युधिष्ठिरं यथाविधि राजसूयेनायाजयन् ॥ १५—१६ ॥

सौत्य इति । सौत्येऽहनि सोमाभिषव दिने अवनीपालो युधिष्ठिरः अपूजयत पूजयितुमुपचकामित्यर्थः ॥ १७ ॥

सदसीति । सदसि सभायामग्र्यार्हणमार्हमग्रपूजार्हं विमृशन्नपि नाध्यगच्छन निश्चितवान् कुतः अनेकान्त्याद्योग्यानां बहुत्वेनैकस्याप्यविशेषात् एवं सति तदा सहदेवो माद्रीसुतः समाहः सन्ध्यानब्रवीत् ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वरुणस्य यज्ञे वरुणम् अनूक्तं समाहृत्य तात्पर्यात्पुनरुक्तं करोति इन्द्रावय इति ॥ १३—१५ ॥

प्रचेतसं वरुणम् ॥ १६ ॥

सूत्ये सोमाभिषवसम्बन्धिन्यहनि पशुसंज्ञपनदिवसे वा ॥ १७ ॥

अग्र्यार्हणादिव अग्रपूजास्वीकारयोग्यं विमृशन्तः विचारयन्तः अनैकान्त्यात्नानायुक्तित्वात् सर्वेषां गुणानामेकत्वानियमात् ॥ १८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सगणाः सेवकसहिताः आदित्यविश्वादयो वा गणदेवाः सिद्धगन्धर्वादयश्च मुनयोधिकारिणः सर्तर्षिरूपाः यक्षरक्षांसि कुबेरपुलस्तिविभीषणादयः खगाः गरुडादयः किन्नराश्चारणाश्च ॥ १४ ॥

ततो द्वीपान्तरस्थाः राजानश्च समाहूताः चकाराद्ब्राह्मणवैश्यादयश्च राजपत्न्यश्च सर्वेश इति अगम्यस्थानेष्वपि यत्तो राजसूयं समीयुः सेति प्रमाणं राज्ञः पाण्डुसुतस्येति महत्ता क्रियत इति तत्रागमनं न लज्जायै ननु सर्वेषां निश्शङ्कमागमने का हेतुरित्याशङ्क्य तमाह—मेनिरे कृष्णभक्तस्येति भक्तस्य देशादिशुद्धिर्न भवतीति सूपपन्नत्वम् अत एवातिसमृद्धिमपि दृष्ट्वा अविस्मिताः ॥ १५ ॥

ततो याजकाः ऋत्विजः राजसूयेन महाराजमयाजयन् देववर्चसः तेषां यज्ञाभिव्यक्तिसामर्थ्यं सूचितं विधिवदिति नानुकल्पः कस्मिन्नप्यंशे पूर्ववदेव दृष्टान्तः प्रचेतसमिवामरा इति ततो मुख्ये "सुत्येऽहनि मध्यंसवने दक्षिणा नीयते" इति यावन्तो वै सदस्यास्ते सर्वे दक्षिण्याः" इति च दक्षिणादानप्रस्तावे ॥ १६ ॥

सुत्येऽहनि राजा याजकान् ऋत्विजः सदसस्पतीन् सभ्यान् अन्यानपि महाभागान् अपूजयत् यथावदाग्रेयादिपूजाप्रकारेण सुसमाहित इति । क्रोधलोभादि—रहितः ॥ १७ ॥

अत्राधिदैविकपूजार्थं मुख्योयमेव याग इति विचार आरभ्यते—सदस्येत्यादि ऋत्विग्भ्य इत्यन्तेन । सदस्याग्र्यार्हा बहुदक्षिणे यागे सुप्रसिद्धा यथा याज्ञवल्क्याय गोसहस्ररूपादत्ता ब्राह्मणेषु ब्रह्मविदेव तदर्हतीति यद्यत्र परब्रह्म न भवति मूर्तिं धृत्वा तत्र जीवानां मध्ये तदभिज्ञोपि महान् भवति यत्र पुनर्भगवानेवाविलुप्तमहिमा मूर्तीः परिगृह्य तिष्ठति तत्र किं पूर्वन्यायेन अनुकल्प एव कर्तव्यः आहोस्विद्भगवते देयमिति अनुकल्पेनापि समारम्भे तेनैव समाप्तिः कर्तव्येति सर्वयागेषु ऋषिभिरनुकल्प एव समारब्धः तस्मादत्रापि ब्रह्मविदाम्मध्ये केनाप्यतिशयेन यो महान् भवति स एव पूजामर्हतीति केचित् तथा सति व्यासो वसिष्ठो वा भवति यज्ञानां सर्वत्र संस्थितः उक्तत्वात् प्रक्रियान्तरे मुख्ये सम्भवति गौणकल्पनाया अन्याय्यत्वात् भगवानेवार्हतीत्यन्ये एवमपि व्यासस्योभयरूपत्वात् कुलवृद्धत्वात्पितामहत्वाच्च स एवार्हतीत्यपरे सर्वधर्माभिज्ञः भीष्मस्ततोपि ज्येष्ठ इति स एवार्हतीति केचित् तस्यापि गुरुः परशुराम इत्यन्ये सर्वत्र च नानाविधा युक्तयः प्रसरन्ति तत्र साधको हेतुः कोप्यव्यभिचारी नास्ति ब्रह्मवित्त्वं भगवत्त्वं मान्यत्वं श्रेष्ठत्वमन्यद्वा साक्षात्परब्रह्मत्वं सर्वकलापूर्णत्वं सच्चिदानन्दविग्रहत्वं कृष्णस्य भगवतः कश्चिदेव जानाति अतोऽज्ञत्वमेव साधारणमिति न सर्वेषां प्रथमतः सम्मतः ततः श्रेष्ठत्वं विमृशन्तः सर्वे एव सभासदः कमपि सर्वोत्कृष्टं नाध्यगच्छन् तत्र हेतुः हेतोरनैकान्त्यादिति तत्र सहदेवः साक्षात्पूर्णपरब्रह्मत्वं सर्वदोषरहितं हेतुं मन्यमानः कृष्णे भगवति तत्साधयितुमब्रवीत् स हि ज्ञानकलावतारः सर्वज्ञो द्वादशवार्षिकमेव्यं जानाति तथाप्यपृष्टो न वदति अत्र तु जिज्ञासायां सर्व एव पृष्टा भवन्ति इति भगवत्प्रेरणया अब्रवीत् ॥ १८ ॥

---

अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान् सात्वतां पतिः ।
एष वै देवताः सर्वा देशकालधनादयः ॥ १९ ॥
यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः ।
अग्निराहुतयो मन्त्राः साङ्ख्यं योगश्च यत्परः ॥ २० ॥
एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत् ।
आत्मनात्माश्रयः सभ्याः सृजत्यवति हन्त्यजः ॥ २१ ॥
विविधानीह कर्माणि जनयन् यदवेक्षया ।
ईहते यदयं सर्वः श्रेयो धर्मादिलक्षणम् ॥ २२ ॥
तस्मात्कृष्णाय महते दीयतां परमार्हणम् ।
एवं चेत्सर्वभूतानामात्मनश्चार्हणं भवेत् ॥ २३ ॥
सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने ।
देयं शान्ताय पूर्णाय दत्तस्यानन्त्यमिच्छता ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वरुणस्य राजसूये यथा सम्भृता इति शेषः ॥ १३—१५ ॥

विस्मिता इति कृष्णभक्तस्यास्य किमसम्भवमिति भावः ॥ १६ ॥

सुत्येऽहनि सोमाभिषवदिने ॥ १७ ॥

सदस्येषु मध्ये अग्र्यार्हणम् अग्रपूजा तस्या योग्यम् अनेकत्वात् योग्यानां श्रेष्ठत्वानिश्चयात् सभासदोऽप्यज्ञा एव ननु अज्ञास्ते तु ब्रह्मरुद्रद्वैपायनादयो वयमधुना न पृष्टाः कथं ब्रूमहे किञ्चौत्पत्तिकसर्वपरीक्षाप्रावीण्यविख्यातः सहदेवोऽत्र पूजायामधिकृत एव वर्णं सत्यमब्रवीत् वक्तुं देवाज्ञ ज्ञानीयात्रा तदा वयमपृष्टा अपि वक्ष्यामह एवेति मनसि निश्चय तूष्णीमेव तत्र वर्तन्ते स्मेति ज्ञेयम् ॥ १८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुरा पूर्वकाले वरुणस्य यथा तथा उपकरणं आसन्निति शेषः ॥ १३—१६ ॥

सुत्ये अहनि सोमाभिषवदिने अपूजयत् पूजयितुमुपचक्रवान् ॥ १७ ॥

अग्र्यार्हणाहम् विमृशन्तोऽपि नाध्यगच्छन् न ज्ञातवन्तः कुतः अनेकान्त्यात् एकस्मिन् अन्तः श्रेष्ठत्वेन पर्य्यवसानं यस्य तदेकान्तं ज्ञानं तस्य भावः ऐकान्त्यं तदभावो नैकान्त्यं तस्मात् तदा सहदेवः माद्रेयः अब्रवीत् श्रीव्यासादीनां तादृशज्ञानवतां तूष्णीभावः सहदेवस्यैव श्रीव्यासाद्याज्ञया तत्राधिकृतत्वात् ॥ १८ ॥

### भाषा टीका ।

पहले वरुण के राजसूय यज्ञ में जैसे पात्र आदि सुवर्ण के रहे ऐसे प्रकार युधिष्ठिर के यज्ञ के भी पात्र आदि सुवर्ण के रहे ॥ १३-१४ ॥

ब्रह्मा, महादेव सहित सर्वा ऋषिजन समूह सहित इन्द्रादि लोकपाल और सिद्ध गन्धर्व विद्याधर बड़े नाग ॥ १४ ॥

मुनिजन यक्ष राक्षस पक्षी किन्नर चारण तथा बुलाए भए राजा लोग राजाओं की ॥ १५ ॥

वे सब पाण्डु के पुत्र राजा युधिष्ठिर के यज्ञ में आवते भए और वे सब आश्चर्य को प्राप्त भए श्री कृष्ण के भक्त राजा के राजसूय यज्ञ को सर्व प्रकार सम्पन्न मानते भए ॥ १६ ॥

देवतान के सदृश तेज धारे ऋत्विज लोग विधि के अनुसार राजसूय यज्ञ से राजा यजन कराते भए जैसे देवताओं ने पहले वरुण को यज्ञ कराते रहे ॥ १७ ॥

सोम के अभिषव दिवसमें राजा युधिष्ठिर सावधान होकर यज्ञ के कराने वाले ऋत्विजन के तथा पूजा के योग्य अन्य सभापतीन के पूजन करने का प्रारम्भ करते भए ॥ १८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

साङ्ख्यं ज्ञानं योग उपासना ॥ २० ॥

ननु, साङ्ख्यं केवलपरं योगः सविशेषणपरः कथमुभयोरेकपरत्वं तत्राऽऽह—एक एवाद्वितीयोऽसावतः साङ्ख्यस्यैतत्परत्वं युक्तम् विशेषणभूतस्य सर्वप्रपञ्चस्य तन्मयत्वात्सविशेषणविषयस्य योगस्यापि युक्तमद्वितीयपरत्वमित्याह—एतदात्म्यमिति

### श्रीधरस्वामिकृतभावार्थदीपिका।

एष श्रीकृष्ण आत्मा यस्य तदेतदात्म तस्य भावः ऐतदात्म्यम् भावितयैव भावनिर्देशः। "ऐतदात्म्यमिदं सर्वम्" इतिश्रुतेः। अत्र हेतुः आत्मनेति, हे सभ्याः! आत्माश्रयोऽन्यनिरपेक्षः स्वयमजः इदं जगत्सृजत्यवति हन्ति चेति ॥ २१ ॥

किञ्च विविधानीति यस्यावेक्षयाऽनुग्रहेण विविधानि कर्माणि तपोयोगादीनि जनयन् कुर्वन् यत्प्रसादयं सर्वोऽपि जनो धर्मादिलक्षणं श्रेय ईहते साधयति कर्माणि तत्फलानि च यदधीनानीत्यर्थः ॥ २२—२३ ॥

---

### श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी।

हि एव अच्युतः सदा सर्वगुणपरिपूर्णः श्रीकृष्ण एव अर्हति तदेव दर्शयन्नाह—भगवान् स्वाभाविकसमग्रैश्वर्य्यादिमान् किञ्च सात्वता भागवता एव तावत्सर्वतः पूज्या भवन्ति तेषामपि पतिः किम्वा तत्रापि सात्वतां यादवानां पतिरिति स्वयं भगवानित्यर्थः। किञ्च एष इति वै प्रसिद्धौ ये देवतादयो यज्ञे तेप्येष एव एतच्छक्त्यैव तेषां देवादित्वमित्यर्थः। आदिशब्दाच्छ्रीभीष्मेणाग्रपूजायां निर्दिष्टा आचार्य्यादयोपि तथाच सभापर्वणि—

"आचार्य्यमृत्विजञ्चैव संयुक्तं च युधिष्ठिर।
स्नातकञ्च प्रियं प्राहुः षडर्घ्यार्हान् नृपं तथा॥ इति

तदिदमनेन स्थानान्तरविधानमेवानूद्यात्र तु साक्षाद्भूते स्वयं भगवति न तु तत्प्रथमतो युज्यत इत्यभिप्रेतम् ॥ १९ ॥

तत्रैव हेतुमाह—यदिति। यः श्रीकृष्ण एव आत्मा रश्मीनां तेजो मण्डलमिव मूलं स्वरूपं यस्य तम् विश्वमशेषं ततः सुतरां क्रतवश्चेत्यादि क्रत्वङ्गान्यग्न्यादयश्च यदात्मकाः अतो मोक्षादिसाधनं च सर्वं तदर्थमेवेत्याह—साङ्ख्यमिति। यत्परो यदाश्रयः ॥ २० ॥

एकशब्देन सजातीयसहायम् अद्वितीयशब्देन विजातीयसहायम् एवशब्देन तत्रतत्रासम्भावनाञ्च निराकरोति अतः ऐतदात्म्यमिति सिद्धं तदेव दर्शयति—आत्मनेति। स्वरूपसिद्धतादृशशक्तिकेन स्वरूपेणैवेत्यर्थः। अत एवान्यनिरपेक्षः अत एव स्वयमज इति अन्यत्तैः यद्वा विश्वस्य तदात्मकत्वमेव विवृणोति एक इति ॥ २१ ॥

श्रीकृष्णस्य कृपयैव सर्वेषां सर्वाणि कर्माणि तत्फलानि च सिद्ध्यन्तीति तदर्थमप्ययमेऽर्हितुं युज्यत इत्याह—विविधानीति। इह कर्मत्वेन आदिशब्देन अर्थादित्रयं तद्भक्तिश्च अन्यत्तैः यद्वा यदवेक्षया यदर्थमित्यर्थः "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इत्यादिश्रुतेः ॥ २२ ॥

उपसंहरति—तस्मादिति। महते सर्वात्मकाय सर्वश्रेष्ठायेत्यर्थः। अतश्च एवमिति अतोऽत्र कस्यापि विप्रतिपत्तिर्न स्यादिति भावः ॥ २३ ॥



उपसंहृत्यापि तर्हि किं स्यादित्यपेक्षायामुत्कण्ठया पुनरुक्तानुवादेनाह—सर्वेति। अत्र सर्वभूतात्मभूतत्वं स्वरूपतः अनन्यदर्शित्वं ज्ञानतः शान्तत्वं ततो विक्षेपाभावात् पूर्णत्वन्तु ततस्तत एवेति अथ च तत्र तत्रोक्ता दानपात्रगुणा एव दर्शिताः तथा सर्वभूतानामात्मभूतायापि अनन्यदर्शिने भक्तासक्ताय शान्ताय निरीहाय सर्वपूर्णायेति श्लेषेण परमैश्वर्यगुणोपि दर्शितः अतो दत्तस्यानन्त्यमिच्छता अस्मा एव देयमिति ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

—अच्युतः परब्रह्म नारायणत्वात् भगवान्—

" ज्ञानशक्तिबलैश्वर्य वीर्यतेजांस्यशेषतः।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः " ॥

इति वचनात् शक्तितेजोभ्यां जातस्यानिरुद्धव्यूहस्यावतारत्वात् भगवान् " वासुदेवपरा वेदाः " " नारायणपरा वेदाः " इत्युपक्रमोक्तस्याभ्यासमाह—यदात्मकमिति ॥ १९—२० ॥

असौ नारायणः एकः नामरूपविभक्ताचिदचिद्विशिष्टः सृष्टेः पूर्वकाले च अद्वितीयः असहायः इदं स्थूलनामरूपविभक्ताचिदाचिद्रूपं जगत् ऐतदात्म्यम् एतदात्मकं सर्वदात्माश्रयः चिदचिदाश्रयं स्वसङ्कल्पेन सृष्ट्यादि करोति २१॥

ईहते लोकाभिवृद्धये ॥ २२—२६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदेवाह—अर्हतीति। श्रैष्ठ्यं श्रेष्ठस्योचितमर्हणमर्हति तत्र हेतुत्वेन विशिनष्टि—सात्वतां ब्रह्मविदां पूर्वोक्तद्वैपायनादीनां पतिः स्वामी किञ्च "एष वै सर्वा देवताः" इत्यादि एष भगवान् इज्याः सर्वदेवताः शरीरात्मभावनिबन्धनमिदं सामानाधिकरण्यं "स आत्मा अङ्गान्यन्या देवताः" इति श्रुतेरितिभावः देशः "समे यजेत" इत्युक्तविधः कालो वसन्तादिः धनानि यज्ञोपयुक्तान्यादिशब्दो यजमानर्त्विगादिसङ्ग्राहकः ॥ १९ ॥

यदिति। देशादयो विप्रान्ता इत्येतद्विश्वं सर्वं यदात्मकं यो भगवानात्मा यस्य तथाभूतं क्रतवश्च साङ्ख्यं प्रत्यगात्मयाथात्म्यानुचिन्तनं योगः परमात्मोपासना तत्सर्वं स भगवान् परो निर्वाहको यस्य तथाभूतम् ॥ २० ॥

किम्बहुनेत्याह—एकेति। इदं चिदात्मकं जगदैतदात्म्यम् एष भगवानात्मा अन्तरात्मा यस्य तथाभूतं स्वार्थे यञ् "एक एवाद्वितीयोऽसौ" आसीदिति शेषः "सदेवेदमग्र आसीत्" "एकमेवाद्वितीयम्" इतिवदयं निर्देशः अविभक्तनामरूपाचिदचिद्विशिष्टपरः एकशब्दः निमित्तान्तरव्युदासार्थः अद्वितीयशब्दः एक इत्यनेन कारणावस्थचिदचितोस्तादात्मकत्वमुक्तम् ऐतदात्म्यम् इत्यनेन कार्यावस्थयोः एवम्भूतोऽसावात्मा स्वयमाश्रय आधारो यस्य सः आत्मनोपकरणभूतेन सर्वान्समष्टिपदार्थान् सृजत्यवति रचति हन्ति संहरति। एवमप्यजः स्वशरीरभूतचिदचिद्गत-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्यादिविकाररहितः "ब्रह्मवनं ब्रह्म स वृक्ष आसीत्" इतिश्रुत्यर्थोऽत्रानुसन्धेयः ॥ २१ ॥

एवम्भूतश्चेदसौ किमित्यस्मदादिवच्चेष्टत अत आह—विविधानीति । यदपेक्षया यस्य लोकस्यापेक्षया ऽनुजिघृक्षया धर्मादिलक्षणं धर्मादिरूपम् आदिशब्दः काममोक्षसङ्ग्राहकः सर्वं श्रेयः जनयन् "लक्षणहेत्वोः"इतिशत्रादेशः सम्पादयितुमित्यर्थः । विविधानि कर्माणि ईहते चेष्टते यत् यस्मादेवं तस्मादित्युत्तरेण सम्बन्धः ॥ २२ ॥

तस्मादिति । महते सर्वोत्कृष्टाय कृष्णाय दीयतां क्रियताम् एवञ्चेत्कृष्णाय दीयते चेत्सर्वभूतानामात्मनो दातुश्चार्हणं बहुमानं कृतं भवेत् सर्वान्तरात्मत्वादिति भावः ॥ २३ ॥

एतदेव व्यञ्जयन् पुनर्हेतुतया विशिंषन्नाह—सर्वभूतानामन्तरात्मभूतायातएवानन्यदर्शिने अन्यत् स्वस्मात्पृथग्भूतं पश्यतीत्यन्यदर्शी ततो नञ्समासः तस्मै सर्वशरीरकायेत्यर्थः । इतरेत्वन्यदर्शिनः न हि तेषामन्यतमाय दत्तमितिरेभ्यो दत्तं भवतीति भावः । शान्ताय रागद्वेषादिरहिताय इतरेत्वशान्ताः न हि तेषां दत्तमन्यतमाय दत्तमितरे सहन्त इति भावः । पूर्णाय स्वभावतोऽवाप्तसमस्तकामाय नित्यसन्तोषिणे इति यावत् । नहि असन्तोषिणे दत्तमनन्तं भवतीति भावः । अतो दत्तस्य दानस्यानन्त्यं फलानन्त्यम् इच्छता कामयमानेन उक्तविधाय कृष्णायैव देयम् ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अच्युतः गुणतः स्वरूपतो वा न क्षीणः श्रैष्ठ्यं गुणज्येष्ठयोग्याग्रपूजनं गुणाः श्रुताः सुविरुद्धाश्च देवे सन्तीत्यादि श्रुतिवाक्यं हि ना सूचयति सात्वन्तः तन्त्रप्रणेतारः एतेषां पतिः स्वामी गतिश्च इदं चाग्रपूजायोग्यत्वे लिङ्गम् इन्द्रो वै सर्वेषां श्रेष्ठः "अग्निर्वै देवानां मुखम्" इत्यादेः इन्द्रादिषु सत्वस्य कथं सम्भवो भवतीति तत्राह एष वा इति । को देवानामिति श्रुतिं वा इत्यनेन गृह्णाति अचेतनमपि तदधीनसत्ताकमित्याह—देशेति ॥ १९ ॥

किम्बहुना सर्वमपि तद्व्याप्तमित्याह यदात्मकमिति । तात्पर्यात्पुनरुक्तं करोति क्रतव इति सांख्यं यथार्थज्ञानं योगः कर्मलक्षणः यः परो विषयो यस्य स तथा ॥ २० ॥

उपसंहरति—एक इति । एतदात्माधीनं हे सभ्याः एतदात्म्यविवरणमात्मेति उक्तार्थसमर्थनं सृजतीत्यादि ॥ २१ ॥

फलहेतुत्वाच्चायमेवात्र योग्यतम इत्याह—यदयमिति ॥ २२ ॥

एतत्तृप्तौ सर्वं तृप्तं स्यादिति भावेनाह एवञ्चेति स्वस्मादन्यस्यास्वातन्त्र्यं न पश्यतीत्यनन्यदर्शी तस्मै देवैः सह वर्तत इति सहदेवो देवव्रतोपि ग्राह्यः भारते तद्वचनादग्रपूजादानायुक्तेः ॥ २३—२४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

आदौ साध्यं निर्दिशति—अर्हत्यच्युतः श्रैष्ठ्यमिति तत्र हेतुर्भगवानिति भगवत्त्वं व्यासादिष्वप्यस्तीत्याशङ्क्याह सात्वतां पतिरिति अन्ये हि कार्यार्थं भगवदंशपुरुषनिर्मितप्रपञ्चैकदेशार्थसिद्ध्यर्थं केनचिदंशेनावतीर्णाः कृष्णस्तु वैष्णवानां पतिरिति कालगृहे समागतान् कालं वञ्चयित्वा नेतुमागत इति मर्यादारक्षार्थं पतित्वात्समागतः अतो भगवदिच्छयैव कालसम्बन्धिनो न तं जानन्ति तस्मादव्यभिचारी हेतुः पूर्णभगवत्त्वमिति ननु तथापि प्रकरणानुरोधेन पदार्थनिर्णयः कर्त्तव्यः प्रकरणमत्र देवानां प्रीतिः यस्ये विभूतीरितिवाक्यात् नहि यत्सेवकेभ्यो देयं तत् स्वामिनो दातुं शक्यते लोकाः स्वामिदर्शनेपि न सेवकेभ्यो प्रयच्छन्तीत्याशङ्क्याह—एष वै देवताः सर्वा इति यदि सर्वे देवाः प्रीणनीयाः तदाख्यानापेक्षया स्वरूपमुत्तममिति यावतीर्वै देवताः यस्यास्ति भक्तिर्भगवत्यकिञ्चनेतिवाक्यानुरोधं परित्यज्य साक्षात्सर्वदेवतारूपं भगवन्तमेव पूजयन्त्वित्यर्थः । वै निश्चये नेति उपचारव्यावृत्तिरुक्ता यथाग्निः सर्वादेवताः "आपोवैसर्वादेवताः" इति तत्र तत्रोपाख्याने सर्वदेवत्वं तेषां गौणभावत्वेन निरूपितं यथा "देवासुराः संयत्ता आसन् ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निःसर्वा देवताः"इति तथाग्निरपि अपः प्राविशत् साग्निलीयतआपः प्राविशदिति एवं केनचिन्निमित्तेनैव सर्वेषां सर्वदेवतारूपत्वं गौणमेव स्वभावत एव भगवान् सर्वदेवतारूपः कदाचित्सर्वमात्मैवभवतीति पक्षे त एव देवा अत्र पूज्याः "इन्द्रादयो बाहवः" इत्यादिवाक्याद्वा आधिदैविका एव यज्ञभाज एव ननु तथापि कस्मिंश्चिद्देशे कस्मिंश्चित्काले तत्र प्रवर्त्तमानस्य यागस्य ऋषीणां तदधीनत्वात् तद्देशतत्कालाभिमानी देवतैव प्रकरणवशात् पूजामर्हतीत्याशङ्क्याह—देशे कालेपि ननु तथापि योग्यं योग्येन सम्बध्यत इति प्राकृता धनादयः पदार्थाः कथं साक्षाद्भगवते दातुं शक्याः लोकेपि विप्राय गुरवे स्वामिने न हि शूद्रः स्वकन्यां प्रयच्छति किन्तु शूद्रायैवाधमायापि दातुं वाञ्छतीत्याशङ्कायामाह—धनादय इति आदिशब्देन वस्त्राभरणानि गवादयश्चोच्यन्ते ॥ १९ ॥

एवं ब्रह्मत्वमङ्गीकृत्य तस्मिन् दानं समर्पितं ब्रह्मत्वं तु साधयति यदात्मकमिदं विश्वमिति विश्वस्यैतदात्मत्वे यशोदाप्रमाणेन केवलं लौकिकात्मत्वे ब्रह्मत्वमिति वेदार्थकथनमप्याह—क्रतवश्चयदात्मका इति क्रतूनां तदात्मकत्वे वराहाद्यवतार एव प्रमाणं सर्वयज्ञस्वरूपत्वं प्रकटयन् तेन रूपेण प्रादुर्भूतो भगवान् सर्वमख्यो हूयत इति अग्नेः प्रीतिः कर्त्तव्येति प्रकरणपक्षेप्याह अग्निरिति "अयमेवाग्निः ब्रह्म तर्हि अग्निः"इति श्रुतेः तादृश एव च होमः यज्ञत्वाय आहुतीनां भगवत्त्वमाह आहुतय इति मन्त्राभिमानिनी देवता प्रकरणवशान्मुख्येत्याशङ्क्याह—मन्त्रा इति । तथापि शास्त्रानुसारेण यो महान् भवति स एव ग्राह्यो भुक्त्वा किञ्चित्कर्त्तव्यमित्याशङ्कायामाह "सांख्यं योगश्च यत्पर"इति वेदादीनि पञ्च शास्त्राणि तत्र ब्रह्मत्वयज्ञत्वे च सिद्धे वेदार्थः सिद्धः सांख्-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ध्यस्यत्वत्रैव तात्पर्यम् एतस्यैव सर्वात्मत्वं स्नेहान्निश्चितं योगस्यापि ध्यानमूर्त्तिरयमेवेति आत्मेति च एतदर्थमेव चित्त-वृत्तिरोधमिति "आत्मन्येव वशी भवेदिति वाक्यात्तात्पर्यं चकारात् पशुपतिमतस्याप्यत्रैव स्कन्दपुराणे महादेवेन स्कन्दं प्रत्युक्तत्वात्—

परमो विष्णुरेवैकस्तत् ज्ञानं परमं मतम् ।
शास्त्राणां निर्णयस्त्वेष तदन्यन्मोहनाय हि ॥ इति

वैष्णवसिद्धान्ते तु न सन्देह एव अतः सर्वशास्त्राणामत्रैव तात्पर्यमित्यर्थः ॥ २० ॥

ननु तथापि ब्रह्मलक्षणाभावे कथं ब्रह्मत्वमिति चेत्तत्राह एक एवाद्वितीयो" इति वेदान्तेषु "एकं ब्रह्म अद्वितीयं ब्रह्म "इति कचित् ब्रह्मलक्षणं कचिन्निर्णयशास्त्रे "विश्वम्ब्रह्मे"ति अत एव विश्वमिति प्रथमं नाम किञ्च तु आत्मानं स्वयमकुरुत "इति श्रुतेः "यो ह्यात्मानं स्वयं करोति स आत्मा ब्रह्म "ति यस्त्वात्माश्रयः स ब्रह्मेति "यतोवाइमानि भूतानि जायन्ते"इत्यादिश्रुतिभिः सृष्टिप्रलयकर्त्ता ब्रह्मैव वस्तु सर्वान्तर्यामी सर्वप्रेरकः स ब्रह्मेति"अन्तरो यमयति"इति श्रुतेः एवम्बहुवाक्यानुरोधेन सर्वमेव धर्मजातं भगवद्गतमित्यनुवदति एकमेवायं महतां दृष्टिरत्र प्रमाणं ते हि सर्वत्र कृष्णमेव पश्यन्ति "अद्वितीयश्च ज्योतींषि विष्णुरित्यादिवाक्यात् तेषामनुभवोपि प्रमाणं सोन्यो भविष्यतीत्याशङ्क्याह—असाविति—

सर्वेषामेव भूतानां पिता माता स माधवः ।
तमेव शरणं यात शरण्यं कौरवर्षभाः ॥

इतिमार्कण्डेयवाक्यात् पर्णपुटे तेनायमेव दृष्ट इति अभिज्ञानञ्च किञ्च ऐतदात्म्यमिदं जगत् दुर्वाससा आरण्यकेपर्वणि निर्द्धारितं अन्यथा शाकान्नमुष्टिभक्षणेन कथं ते तृप्ता भवेयुः किञ्च अयमेव आत्मनात्माश्रयोभूत्वा जगदात्मस्वरूपं सृजत्यवति हन्ति स्वयं त्वजः अत्र प्रमाणं सभ्या इति सम्बोधनं सम्मत्यर्थम् ॥ २१ ॥

किञ्च इहैव जगति विविधानि कर्माणि जनयन् यो वर्त्तते सर्वकर्माण्ययमेवोत्पादयति योतः प्रविश्यमन्वाचमिति वाक्यानुसारेण अत्रापि प्रमाणं सभ्या इत्येव किञ्च साक्षीचायं यतः सर्वोपि लोकोऽस्मदादिः धर्मादिलक्षणं श्रेय ईहते यदवेक्षयैव न हि भगवदवेक्षाभावे श्रेयः सिध्यति अत्र वयमेव प्रमाणम् ॥ २२ ॥

तस्मात् साक्षात् पूर्णपरब्रह्मत्वात् सर्वानुपपत्त्यभावाच्च कृष्णायैव दीयतां परमार्हणं तथाप्यस्मदपेक्षया कनिष्ठः मातुलेयः कथं दानमर्हतीत्याशङ्कायामाह—महत इति । विश्वरूपप्रदर्शनात् पितामातेतिवाक्याच्च महत्त्वं सिद्धं मोहार्थमेव च तस्याल्पत्वमिति परन्त्वल्पार्हणं न देयं किञ्च परमार्हणं नन्वेवकृते को विशेषः अलौकिकं च भवति अतो व्यासादिरेव कश्चित् पूजार्हो भवत्वित्याशङ्कायामाह—एवञ्चेदिति । अत्रैव बहवः समानास्तिष्ठन्ति सर्वे एवैकवा पूजयितुमशक्याः त एकपूजायामन्यद्रोहो भवतीति प्रत्यक्षविरोधः अन्योन्यादेवतामुपास्त इति श्रुतिविरोधश्च अतस्तादृशायदेयं यस्मिन् दाने सर्वे एव तृप्ता भवन्ति सोयमेवेत्याह—एवं चेत्सर्वभूतानामात्मनश्चार्हणं भवेदिति ॥ २३ ॥

तत्र हेतुः सर्वभूतात्मभूतायेति सर्वभूतभूतः आत्मभूतश्च वेदव्यासव्यावृत्त्यर्थं कृष्णायेत्येकवचनकथनं ननु तथापि गृहीतावतारः कदाचिदपि आत्मानं परिच्छिन्नं मन्येत तदा दोषाद्दानमनुचितं स्यादित्याशङ्क्याह अनन्यदर्शिन इति न तस्य कचिदप्यन्यदर्शनमस्ति किन्तु सर्वमात्मत्वेनैव पश्यतीत्यर्थः प्रसङ्गाद्दोषान्तरमपि वारयति शान्ताय पूर्णायेति शान्तो दानपात्रं पूर्णश्च लोलुपताक्रोधदोषौ एवं निर्दोषपूर्णगुणपात्रे दाने अनन्तं फलं भवति ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रैष्ठ्यमात्यन्तिकम् आपेक्षिकमपि श्रैष्ठ्यं वस्तुतोऽस्यैवेति कैमुत्येनाह–एष वै इति ॥ १९ ॥

उक्तमर्थं विवृणोति । यदात्मकमिति साङ्ख्यं ज्ञानं योगोऽष्टाङ्गः यत्परः यद्विषयकः ॥ २० ॥

उक्तमर्थं प्रतिपादयति एक एव सजातीयभेदरहितः परमेश्वरान्तराभावादितिभावः अद्वितीयो विजातीयभेदरहितश्च तत्र हेतुः ऐतदात्म्यमिति स्वार्थेष्यञ् एतदात्मकमित्यर्थः एतच्छक्तिकार्यत्वादेव ऐतदात्मकमित्याह—आत्मना प्रकृत्या आत्माश्रयः अनन्याश्रयः हे सभ्याः ! इति अत्र विप्रतिपत्तिश्चेद्विप्रतिपद्यतां मयैव सर्वं समाधेयमिति भावः ॥ २१ ॥

श्रीकृष्णस्य कृपयैव सर्वलोकस्य सर्वकर्माणि तत्फलानि च सिध्यन्तीति—तदर्थमप्ययमग्रेऽर्हितुं युज्यत एवेत्याह विविधानीति इह भूलोके यदवेक्षया यत् कृपावलोकेनैव तपोयोगादीनि जनयन् कुर्वन् यत् यस्मादयं सर्वोपि जनो धर्मादिलक्षणं श्रेय ईहते साधयति कर्माणि तत्फलानि च यदधीनानीत्यर्थः ॥ २२—२३ ॥

न केवलमिदमिदानीमेव रजन्यास्मिन्नेव विधीयते किन्तु विधिरयं सार्वकालिकः सार्वलौकिकश्चेत्याह—सर्वेति अनन्यदर्शिने स्वाभिन्नदर्शिने ॥ २४ ॥ २५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

साङ्ख्यं चेतनाचेतनविवेकः योगः परमात्मध्यानयोगः ॥ २० ॥

एकः अद्वितीयः निस्समानातिशयः आत्मनात्माश्रयः स्वाश्रयः स्वयमज इदं सृजत्यवति हन्ति अत एवेदं जगदैतदात्म्यम् ॥ २१ ॥

यस्य प्रेरकस्य अवेक्षया अवलोकनेन विविधानि कर्माणि जनयन् कुर्वन् यत् यस्मात् कर्मफलदात् सर्वोपि जनः धर्मादिलक्षणं श्रेयः ईहते साधयति ॥ २२ ॥

यस्मादेवं तस्मात् कृष्णाय परमार्हणं दीयताम् ॥ २३ ॥

सर्वेषां भूतानामात्मभूताय उपादानभूताय अतएवानन्यदर्शिने अन्यत्स्वस्माद्भिन्नं पश्यतीति अन्यदर्शी तन्न भवतीति अनन्यदर्शी तस्मै सर्वभूताभिन्नाभिन्नायेत्यर्थः ॥ २४—२६ ॥

इत्युक्त्वा सहदेवोऽभूत्तूष्णीं कृष्णानुभाववित् ।
तच्छ्रुत्वा तुष्टुवुः सर्वे साधु साध्विति सत्तमाः ॥ २५ ॥
श्रुत्वा द्विजेरितं राजा ज्ञात्वा हार्दं सभासदाम् ।
समर्हयद्धृषीकेशं प्रीतः प्रणयविह्वलः ॥ २६ ॥
तत्पादाववनिज्यापः शिरसा लोकपावनीः ।
सभार्यः सानुजामात्यः सकुटुम्बोऽवहन् मुदा ॥ २७ ॥
वासोभिः पीतकौशेयैर्भूषणैश्च महाधनैः ।
अर्हयित्वाऽश्रुपूर्णाक्षो नाशकत्समवेक्षितुम् ॥ २८ ॥
इत्थं सभाजितं वीक्ष्य सर्वे प्राञ्जलयो जनाः ।
नमो जयेति नेमुस्तं निपेतुः पुष्पवृष्टयः ॥ २९ ॥
इत्थं निशम्य दमघोषसुतः स्वपीठादुत्थाय कृष्णगुणवर्णनजातमन्युः ।
उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी संश्रावयन् भगवते परुषाण्यभीतः॥३०॥

### भाषा टीका ।

वहां के सभा में बैठे भए पुरुष सभ्य पुरुषा के मध्य में प्रथम पूजा के योग्य श्रेष्ठ पुरुष का विचार करते २ सभा में अनेक योग्य पुरुषों के होने से किसी एक नियत पुरुष का निश्चय जब न करसके तब माद्रीको पुत्र सहदेव बोला ॥ १९ ॥

परमपूज्य सनकादिकन के भी स्वामी श्रीकृष्णभगवान हि अग्रपूजा के योग्य है क्यों कि ब्रह्मादिक सब देवता और देश काल द्रव्य आदिक सब यहि के आधीन है ॥ २० ॥

यह सब विश्व श्रीकृष्ण का शरीर है और सब यज्ञ इनका आराधन हैं तथा अग्नि आहुति वेद मन्त्र इनका हि रूप हैं और ज्ञान मार्ग तथा कर्म मार्ग इनकी प्राप्ति के उपाय हैं ॥ २१ ॥

हे सभ्य ओ ! कर्माधीन जन्म रहित और निज समान रहित तथा सहकारी रहित यह श्रीकृष्ण हि सृष्टि के पूर्व काल में रहा और इस जगत्का अन्तरात्मा यहि है और स्वतन्त्र होकर अपने संकल्प से हि यह जगत्को सृजता है पालन करता है संहार करता है ॥ २२ ॥

इस संसार में यह सबहि लोक जिस के अनुग्रह से नाना प्रकार के कर्मों को करता भया जिस से अपने मनो वाञ्छित फलको प्राप्त होता है ॥ २३ ॥

इसी कारण से परमपूज्य श्रीकृष्ण के अर्थ अग्रपूजा दीजियेगा ऐसा कीये तो सब प्राणियों का और पूजा करने वारे का पूजन होजावेगा ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीकृष्णानुभाववित् सहदेव इत्युक्त्वा तूष्णीमभूत् ॥ २५ ॥
द्विजेरितं साधुसाध्विति घोषं श्रुत्वा हार्दमभिप्रायम् ॥ २६—३१ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इत्युक्त्वेत्यत्र हेतुः कृष्णानुभावविदिति तच्छ्रुत्वेति तादृगनैकान्त्यादेव तत्र किञ्चिदवलम्बनापेक्षयैव ते पूर्वन्तूष्णीमासन्निति भावः । सत्तमा अत्र द्विजाः श्रुत्वा द्विजेरितमिति वक्ष्यमाणात् ॥ २५ ॥

सभासदामन्येषाञ्च सर्वेषां हार्दं सम्मतिमित्यर्थः । यद्वा श्रीकृष्णे स्नेहं ज्ञात्वाच प्रीतः सानन्दस्सन् निजाभीष्टसिद्धेः अत एव प्रणयेन तत्प्रेम्णा विह्वलोपि समर्हयत् सम्यगर्हयत कुतः हृषीकेशं प्रणयकोपेन तत्र मुहुः कृतवर्जनमपि सभावतः कृतसर्वेन्द्रियाकर्षम् ॥ २६ ॥

सम्यकृत्वमेव दर्शयति—तदिति द्वाभ्याम् ॥ २७ ॥

महाधनैरमूल्यैरित्यर्थः । इदं वास आदीनां सर्वेषामेव विशेषणम् ॥ २८ ॥

नम इति केचित् जयेति केचित् केचित्त्वत्यन्तहर्षेण नमो जयेति च वदन्तः ॥ २९ ॥

अत्र यद्यपि शिशुपालदन्तवक्त्रयोर्जयविजयत्वेन वान्तरासुरभावः किन्तु बहिस्तदनुकरणमेवेति हिरण्याक्षयुक्तटीका कृद्भिर्मुहुर्दर्शितमस्ति युक्तञ्च तत् अन्यथा लीलेयं भक्तसौख्याय स्वसौख्याय च न कल्पतेति तदुद्देश्यविशेषः स्यात् अन्तरानुकूल्यादेव सिद्धायामेव पूजायां तादृशं वक्तुमारेभे

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तस्मादनयोर्वचस्यर्थान्तरं वास्तवम् अन्येषान्तु गीर्देवीप्रेरितमेव तथापि युद्धरसपोषणार्थं यथादृष्टमेव स्पष्टमाह—इत्थमिति । निशम्य श्रीसहदेववचनमारभ्य नमो जयेत्यन्तं श्रुत्वा दमघोषसुत इति पितुरपि दुष्टत्वेन तस्य तदाधिक्यं सूचितं तथैव श्रीहरिवंशे गोमन्थदाहमन्त्रणे व्यक्तं श्रीकृष्णस्य गुणवर्णनेनापि किम्पुनरर्हणेन जातो मन्युः क्रोधो यस्य सः यस्मादमर्षी असहिष्णुः मत्सरीत्यर्थः । यद्वा जातमन्युर्जातशोकः अमर्षी क्रुद्धश्च सन् अत एव स्वपीठादुत्थाय बाहुं दक्षिणमुत्क्षिप्य च सम्यक् समीप एवोच्चैर्भाषणादिना अश्रावयत् यस्मादभीतः महासाहसिक इत्यर्थः ॥ ३० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अवनिज्य प्रक्षाल्य ॥ २७—४५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । कृष्णप्रभाववित् सहदेवस्तूष्णीं बभूव तत्सहदेवोक्तं श्रुत्वा सर्वे सत्तमाः द्वैपायनादयः साधुसाध्विति तुष्टुवुः ॥ २५ ॥

श्रुत्वेति । द्विजेरितं साधु साध्विति घोषं श्रुत्वा सभासदां सभ्यानां जातं हार्दमभिप्रायं ज्ञात्वा चेति शेषः । यद्वा जातमभिव्यक्तं हार्दमभिप्रायो यस्मात्तद्द्विजेरितं श्रुत्वेत्यर्थः राजा युधिष्ठिरः प्रीतः प्रीतियुक्तः प्रणयेन स्नेहेन विह्वलः परवशः समार्चयत् ॥ २६ ॥

अर्चनप्रकारमेवाह—द्वाभ्याम् । तस्य भगवतः पादाववनिज्य प्रक्षाल्य लोकान्पावयन्ति पुनन्तीति तथा ता अपः भार्यादिसहितः शिरसा वहन् ॥ २७ ॥

पीतैः कौशेयैश्च वासोभिर्महाधनैर्बहुमूल्यैरनर्घ्यैरिति यावत् भूषणैश्चार्हयित्वा अश्रुभि आनन्दाश्रुभिः पूर्णे अक्षिणी यस्य सः तं भगवन्तमवेक्षितुं नालं न प्रबभूव ॥ २८ ॥

इत्थमिति । इत्येवं सभाजितं सम्पूजितं भगवन्तमवलोक्य नमो जयेति वदन्त इति शेषः । तं श्रीकृष्णं नेमुः नमश्चक्रुः ॥ २९ ॥

इत्थमेवम्भूतं श्रीकृष्णस्य गुणवर्णनं श्रुत्वा दमघोषसुतः शिशुपालः जातो मन्युर्यस्य सः स्वासनादुत्थाय बाहुमुत्क्षिप्य उद्धृत्य अमर्षी क्रुद्धो ऽभीतश्च भगवते परुषाणि वचांसि संश्रावयन् संश्रावयितुम् इदं वक्ष्यमाणमाह इत्यर्थः ॥ ३० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सत्तमाः सतां श्रेष्ठाः ॥ २५—३० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं युधिष्ठिरमुक्त्वा स्वयमुद्यममकृत्वा तूष्णींभूतः अन्यथा पूजार्थं स्वयमेव बलात् सामग्रीं सम्पादयेत् तत्र हेतुः कृष्णानुभावविदिति स्वयमेव भगवदनुभावः सर्वेषां हृदयं प्रेरयिष्यति यद्यभिप्रेतोर्थो भविष्यति अत्र भगवद्धर्माः प्रकटीभविष्यन्तीति भगवदिच्छायां सन्देहात् तूष्णींभावः ततो भगवदिच्छया तद्वाक्यं सर्वसम्मतं जातमित्याह—तच्छ्रुत्वेति । सर्व एव सोर्थः सर्वयुक्तिसह इति साधुसाध्विति त्यक्त्वा भगवन्त सहदेवं तुष्टुवुः दैत्यांशानां स्तोत्रं तेषां नाशप्रतिबन्धकमिति तत्र भगवदिच्छाभावात् सत्तमा एव तथोक्तवन्तः ॥ २५ ॥

ततः सर्वसम्मतिं ज्ञात्वा शापादिभयं परित्यज्य भगवत्पूजार्थं प्रवृत्त इत्याह—श्रुत्वा द्विजेरितमिति । सर्वैरेव द्विजैरीरितं राजत्वात्तेषां भावमपि जानाति तदाह ज्ञात्वा हार्दं सभासदामिति अत्र वादिनामविवादं मन्यन्ते सभासदां ततः इन्द्रियप्रेरकमन्तर्यामिनं तत्प्रेरितस्सन् समर्हयन् प्रीत इत्यन्तःकरणेन पूजनं प्रणयाविह्वल इतीन्द्रियैः शरीरेण तु पूजयत्येव ॥ २६ ॥

तत्पूजाप्रकारमाह—तत्पादाववनिज्येति । चरणोदकधारणमतिश्रद्धाबोधकम् अन्यथा अश्रद्धयेति दानं व्यर्थं स्यात् अतः अपः लोकपावनीः शिरसा अवहत् सभार्य इति सम्पूर्णः सानुगामात्य इति सेवकामात्यसहितः सकुटुम्बश्च अनेन सर्वेषां श्रद्धा सम्मतिश्चोक्ता ॥ २७ ॥

ततः पीताम्बरादिभिः पूजनमाह—वासोभिरिति । योग्यत्वाय पीतकौशेयैः पीतपट्टवस्त्रैः महाधनैर्भूषणैश्च पूजनं हर्षश्चान्तरस्थः भक्त्या पूजनं नाङ्गविकलं भवतीति ज्ञापयितुमाह—अर्हयित्वेति । अश्रुभिः पूर्णे अक्षिणी यस्येति भगवद्दर्शनेन चक्षुस्तेजःप्रस्रवसहितं जातमित्यर्थः । ततो यथाभिलषितेनापि न द्रष्टुं शक्त इत्याह नाशकत्समवेक्षितुमिति दर्शनोपभोगेनापि तत्र व्ययितमिति तस्याधिदैविकसमाराधनं पूर्णमेव स्थितमिति सूचितम् ॥ २८ ॥

अयमुत्तमाधिदैविको धर्मो भवतीति ज्ञापयितुं सर्वसभाजनमाह—इत्थं सभाजितमिति । कायवाङ्मनोभिः स्तोत्रं मात्सर्याभावश्चोच्यते प्राञ्जलय इति कायिको व्यापारः नेमुरिति मानसः जयेति वाचनिकौ मात्सर्याभावश्च न केवलं तत्रस्थानां किन्तु दिविष्ठानामपीति ज्ञापयितुमाह-निपेतुः पुष्पवृष्टय इति अयं धर्मः सर्वोत्तमो जात इति ज्ञापनार्थम् ॥ २९ ॥

दैत्यांशस्यानभिनन्दनं प्रद्वेषो निन्दा च भगवतश्चाभिप्रेतोर्थ इति स्वतस्तन्मारणं सर्वात्मकत्वात् तस्यापि भोगार्थं बाधकांशं निराकृत्य सायुज्यमपि निरूप्यते तत्रादौ तद्दर्शनेन दैत्यक्षोभमाह इत्थं निशम्येति सर्वेषामनुमोदनं स्तोत्रं च निशाम्य विपरीतमदस्य दुष्टमदस्य यो घोषः सर्वलोकेषु वम्बारवः तदात्मको दमघोषः तत्सुतः बीजयोनिदोषेण दुष्टः स्वतोपि उपविष्टश्चेत् ब्रूयात् तदा सर्वोपि न श्रोष्यतीति स्वपीठादुत्थाय भगवता स्वधर्मप्राकट्ये कृते सिंहासने भगवद्धर्मः प्रकटो जात इति सन्तत उत्थापित इति वस्तुस्थितिः तस्यानधिकारं सूचयति कृष्णगुणवर्णनेन जातो मन्युर्यस्येति

ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ।
वृद्धानामपि यद्बुद्धिर्बालवाक्यैर्विभिद्यते ॥ ३१ ॥
यूयं पात्रविदां श्रेष्ठा मा मन्ध्वं बालभाषितम् ।
सदसस्पतयः सर्वे कृष्णो यत्सम्मतोऽर्हणे ॥ ३२ ॥
तपोविद्याव्रतधरान् ज्ञानविध्वस्तकल्मषान् ।
परमर्षीन् ब्रह्मनिष्ठांल्लोकपालैश्च पूजितान् ॥ ३३ ॥
सदस्पतीनतिक्रम्य गोपालः कुलपांसनः ।
यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥ ३४ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स एव दैत्यांशो ज्ञेयः भगवत्सम्बन्धिनमर्थं श्रुत्वा न सहते सन्तप्तश्च भवति प्रतिकूलं च वदति ततश्च दैत्यसन्धानं यज्ञे न युक्तमिति भगवत्प्रेरणयैव तस्यातथावचनम् अन्यथा वध्यो न भवति देवा मनुष्याः पितर एकत्र असुरा रक्षांसि पिशाचाश्चैकत्र "अपहता असुरा रक्षांसि पिशाचा वेदिषः" इति मन्त्रलिङ्गात्सर्वथा निराकार्याः असुरादयः तत्रायं बन्धुवेषेण गुप्त इति अशक्यवधो भवति तदर्थमेतावन्निरूप्यते उत्क्षिप्य बाहुमिति क्रियाशक्तिः स्वस्य महती सूचयति इदं वक्ष्यमाणमाह सदसस्पतीति तस्यापराधः सर्वजनीनो भवत्विति ज्ञापितं सदसि वा सर्वानेव भगवतः अपरुषाणि अभीक्ष्णशः श्रावयन्निति सर्वेषामेव शत्रुरयमिति ज्ञापितम् अभीत इति सर्वेषामशक्यवधः ॥ ३० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

द्विजानामीरितं साधुसाध्विति घोषं समर्हयत भो कृष्ण त्वं सर्वलोकानां पादावनेजनकर्मणि स्वगृहीते व्यग्रो वर्त्तसे साम्प्रतं परन्तु ब्रह्मरुद्रादिसर्वाग्रपूज्यस्य तव पादावनेजनार्थं व्यग्रो राजा त्वामाकारयति तस्त्वं तत्र शीघ्रं गच्छेति सान्देशिकलोकद्वारा सम्यक् प्रकारेणानीय अर्हयत् पूजयामास आडभाव आर्षः । हृषीकेशं स्वपादावनेजने मैवमेवं कुर्विति प्रणयकोपिनमपि सर्वेन्द्रियाण्ययाकर्षन्तम ॥ २६—२९ ॥

अमर्षी असहिष्णुरतो जातमन्युः अत्र पूजाया आरम्भकाले नोक्तं किन्तु पूजासमाप्त्यनन्तरमेवेत्यत्र शिशुपालस्यायमभिप्रायः यद्यहमधुनैव विप्रतिपद्य बहूनेव हेतूनुपन्यस्य कृष्णस्यापूज्यत्वं प्रतिपादयामि ततो निरस्तीकर्त्तुमशक्यतमस्य ममैव मतं गृहीत्वा सभ्याः कृष्णमपूजयित्वा कमप्यन्यमेव योग्यमग्रपूजायां व्यवस्थापयिष्यन्ति यज्ञश्च साधुप्रवर्त्तिष्यते तस्मात् यज्ञं विजिघांसुरहं साम्प्रतं तूष्णीमेव वर्त्तिष्ये कृष्णे खलु पूजिते सत्येव तस्यापूज्यत्वे मत्प्रतिपादिते—

> अपूज्या यत्र पूज्यन्ते पूज्यानां च व्यतिक्रमः ॥ इति
> प्रति बध्नातिहि श्रेयः पूज्यपूजाव्यतिक्रमः ॥

इत्यादिस्मरणात् युधिष्ठिरस्यायं यज्ञो नष्ट इत्युक्त्वा मयि मत्संगिषु बहुषु राजसु वेदविद्विप्रेषु चास्य भ्रातृबन्धुषु दुर्योधनादिषु चोत्थाय गतेषु हाहाकारे प्रवृत्ते मदभीष्टं सेत्स्यतीति ॥ ३०—३१ ॥

---

### भाषाटीका ।

दीए भए दान के अनन्त फल की इच्छा करने वारे को सब प्राणियों के अन्तरात्मा तथा देव मनुष्यादि प्राकृत आकार को नहि देखे वारे शांत स्वरूप परि पूर्ण श्रीकृष्ण के अर्थ हि अग्रपूजा देना योग्य है ॥ २५ ॥

श्रीकृष्ण के प्रभाव से ज्ञाता सहदेव इस प्रकार कह कर चुप होगया उसके वचन को सुनकर सबहि श्रेष्ठहि जन अच्छा २ इस प्रकार प्रशंसा करते भए ॥ २६ ॥

ब्राह्मणों के बचन को सुनकर तथा सभासदों के अभिप्राय को जानकर स्नेह से विह्वल प्रसन्न चित्त भया राजा युधिष्ठिर श्रीकृष्ण की अग्रपूजा करता भया ॥ २७ ॥

श्रीकृष्ण के चरणारविन्दों का प्रक्षालन कर लोकन को पवित्र करने वारे उस जलको भार्या सहित भ्राताओं सहित मंत्री सहित कुटुम्ब सहित मोद के साथ राजा मस्तक स धारन करता भया ॥ २८ ॥

रेशमी पीताम्बर वस्त्रों से और अमोल भूषणों से श्रीकृष्ण का पूजन करके आनन्द के अश्रुपातन से परिपूर्ण नेत्र वारा भया राजा सम्यक् देखने को समर्थन हि भया ॥ २९ ॥

इस प्रकार श्रीकृष्ण को पूजित देखकर सबहि जन अञ्जलि जोडकर नमः जय इस प्रकार श्रीकृष्ण को प्रणाम करते भए । तथा आकाश ते पुष्पन की वर्षा होती भई ॥ ३० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हे सदसस्पतः ! यत्सर्वे बालस्य भाषितं मा मन्ध्वं मा जानीत माग्रहीत किं तत् यद्यतः कृष्णोऽर्हणे अग्रपूजायां सम्मतस्तत् ॥ ३२-३३ ॥

वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः ।
स्वैरवर्त्ती गुणैर्हीनः सपर्यां कथमर्हति ॥ ३५ ॥
ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम् ।
वृथा पानरतं शश्वत्सपर्यां कथमर्हति ॥ ३६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्यैव वास्तवोऽर्थः पूर्ववदुन्नेयः गोपाल इति वेदपृथिव्यादिपालक इत्यर्थः । कुत्सितं वेदविपरीतं लपन्तीति कुलपाः पाषण्डास्तान् असते समाघातयतीति तथा सः अकाकः कञ्च अकञ्च काके सुखदुःखे ते न विद्येते यस्य सोऽकाकः आप्तकाम इत्यर्थः । स यथा आप्तकामो देवयोग्यं केवलं पुरोडाशमात्रं नार्हत्यपितु सर्वस्वमपि तथाऽयं श्रीकृष्णोऽपि ब्रह्मर्षियोग्यं सपर्यामात्रं कथमर्हति किन्त्वात्मसमर्पणमप्यर्हतीत्यर्थः ॥ ३४ ॥

वर्णाश्रमकुलेभ्योऽपेतो ब्रह्मत्वात् "अनामगोत्रम" इतिश्रुतेः अत एवानधिकारित्वात्सर्वैर्धर्मैर्बहिष्कृतः स्वैरवर्ती परमेश्वरत्वात् अत एव निर्गुणस्तम आदिरहितः एवम्भूतो जीवानां योग्यं तुच्छं सपर्यामात्रं कथमर्हतीत्यर्थः ॥ ३५ ॥

अपिच कथं वर्णनीयो मादृशैरेषां यदूनां महिमा यस्मादेषां कुलं ययातिना शप्तमपि किं सद्भिर्बहिष्कृतमपि तु शिरसा धृतं किञ्चास्मदादिकुलवार्त्तिकं वृथा पानरतमपित्वति नियताचारमित्यर्थः । अहो यदूनामेव तावदीदृशं माहात्म्यम् यदुकुलवृद्धस्य ययातेः शापोन प्राभूदित्यादि अयन्तु साक्षादीश्वरोऽतः सपर्यामात्रं कथमर्हतीत्यर्थः ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आदौ स्वमतग्रहणार्थमुपालम्भगर्भं सभ्याननुनयन्नाह—ईशः कुघटघनाशक्तः नच परिहर्त्तुं शक्य इत्याह दुरत्यय इति सत्यवती सत्या श्रुतिरैतिह्यं वेदो वा कुतः अपूर्वप्रवर्त्तनादित्याह वृद्धानामिति यद्यस्मात् कालात् ॥ ३१ ॥

ननु, सा बुद्धिः क्वानामेत्यपेक्षायामाह—यूयमिति । बालस्य सहदेवस्य भाषितं मामन्यध्वम् अधुनापि पूजां परिवर्त्तयध्वमित्यर्थः । तत्र हेतुः पात्रविदां श्रेष्ठाः अग्रपूजापात्रं यूयमेव वेत्थ न त्वयं बाल इत्यर्थः । यद्यस्मात् भाषितात् कृष्ण इति मूलनामग्रहणमनादरेण वास्तवार्थे सा श्रुतिः सत्यैव किन्तु यूयं बालस्य मूर्खस्य मम भाषितं मा मन्यध्वं यतः पात्रविदां श्रेष्ठाः तत्र हेतुः यद्यस्मात् श्रीकृष्णो नराकृतिपरब्रह्मरूपोऽयमर्हणे सम्मत इति ॥ ३२ ॥

किञ्च, पूजायोग्यत्वाभावे कथञ्चिदर्हतु अत्र च तद्योग्येषु महत्सु कथमयमर्हतीत्याह—तप इति युग्मकेन । तपः स्वधर्मः विद्याः चतुर्दश व्रतं कृच्छ्रादि तद्धरान् अतिव्रज्य अति क्रम्येति वा पाठः । कुलपांसनः मातुलवधादिना स्वकुलदूषणः वास्तवार्थैत्वेवमवतारिका किन्तु तप इत्यादि वाक्या चेयं क्व्या गोपालः आभीरजातिरिति प्राकृतदृष्ट्या तद्वाक्यव्याजेन वेदागमोक्तमहामन्त्रगणाधिदैवत्वेनाप्राकृततल्लीलत्वात् स्वतः परममाहात्म्यविशेषः सिद्धः तथापि बाह्यमहिमदृष्ट्यैव वेदपृथिव्यादिपालक इति व्याख्यातम् ॥ ३३–३४ ॥

ननु, महादुष्टकंसवञ्चनार्थं गोपालेन तस्य च वधेन को नाम दोषः इति स्वयमेवाशङ्क्याह—वर्णेति । यथाश्रुतार्थः स्पष्टः वास्तवार्थे ब्रह्मत्वेश्वरत्वपक्षस्तैर्व्याख्यातः नरलीलापक्षेपि यदि वर्णाश्रमकुलापेतादिरूपः स्यात्तदा सपर्या देवमुन्यादिभिः क्रियमाणत्वेन सर्वतः प्रसिद्धां कथमर्हति नार्हेदेवेत्यर्थः ॥ ३५ ॥

यतो ययातिनेति तं निन्दन् तत्सम्बन्धिनो यादवानपि सर्वान् निन्दति द्वाभ्याम् हि यतः शप्तं तदनुसारेण सद्भिश्च बहिष्कृतं परित्यक्तमित्यमित्यर्थः । वास्तवार्थे सद्भिर्महामुनिभिस्तत्तद्यजनादिना बहिष्कृतं तस्माच्छापादित्यर्थः । अतः पानं पृथिवीपालनं यस्तत्र रतमासक्तं तर्हि कथं सपर्यां वृथाऽर्हति अपितु सार्थकमेवेत्यर्थः ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह—ईश सप्तभिः । ईशः ब्रह्मादीनामपि प्रभुः कालो दुरत्ययः दुरतिक्रमणीयः इत्येवम्विधा श्रुतिः किम्वदन्ती सत्यवत् यथार्था कुतः यत यस्मात् वृद्धानामपि बुद्धिः बालस्य सहदेवस्य वाक्यैः भिद्यते विपरीता क्रियते इत्यर्थः ॥ ३१ ॥

यूयमिति । हे सदसस्पतयः बालभाषितं मा मन्ध्वं मा गृह्णीत किन्तत् यदर्हणे कृष्णः सम्मत इति तत् ॥ ३२ ॥

तपइत्यादि । तपोऽनशनादि विद्या शास्त्रजन्यं ज्ञानं व्रतं कृच्छ्रादि एतानि धरन्तीति तथा तान् ज्ञानं परमात्मोपासनात्मकं तेन विध्वस्तं कल्मषं पापं येषां तान् ब्रह्मणि परस्मिन् निष्ठा येषां तान् साक्षात्कृतब्रह्मस्वरूपानित्यर्थः । एवम्भूतान् परमर्षीनतिक्रम्यानादृत्य कुलाधमोऽसौ गोपालः काकः पुरोडाशमिव सपर्यां प्रति कथमर्हति ॥ ३३–३४ ॥

किञ्च, वर्णेति । वर्णादिभ्योऽपेतः भ्रष्टः सर्वस्माद्वर्णादिप्रयुक्त धर्मादिप्रयुक्ताद्धर्माद्बहिष्कृतश्च स्वैरं स्वेच्छं वर्त्तत इति तथा गुणैर्निरवद्यैर्हीनो रहितः ॥ ३५ ॥

ययातिनेति । एषां यदूनां कुलं ययातिना तत्कूटस्थेन शप्तं सद्भिः कुलीनैर्बहिष्कृतञ्च च शश्वत्सदा वृथा पाने रतं तत्परम् ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ईशः कालो दुरत्ययः इति श्रुतिः सत्यवती यथाधितार्थां तदुपपादयति । वृद्धानामिति ॥ ३१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मा मनुध्वं हे सर्वे सदसस्पतयः ! किं बालभाषितं तदाह कृष्ण इति ॥ ३२—३३ ॥

अतिव्रज्यातिक्रम्य कुलकर्मणि एते इत्याह गोप इति ॥३४॥

एतदेव विवृणोति वर्णेति ॥ ३५ ॥

यदोर्वंशे जातत्वात्कथं कुलाभाव इति तत्राह—ययातिनेति ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तादृशस्य सर्वोपालम्भवाक्यमाह—ईशो दुरत्ययः काल इति । सदस्सस्पतयो हि सभायां युक्तायुक्तं विचारयन्ति अतस्तान् प्रत्युपालम्भ उचितः यत् दैत्यांशः समीपे स्थितोपि न निवार्यत इति यदत्रानुचितं जायते धर्मस्थाने हेतुः काल एव स हि कदाचित् धर्ममङ्गीकरोति कदाचिदधर्ममिति द्विःस्वभावः सच ईशः कस्याप्यनुल्लङ्घ्यः इति कालमाहात्म्यवादिनी श्रुतिः सत्यैव स कालो यद्वशे लोक इति कालस्य त्वया विपरीते धर्मे दृष्ट इत्याकाङ्क्षायामाह—वृद्धानामपि यद्बुद्धिरिति उभयथापि सभासदो वृद्धाः निन्दापक्षे सहदेवो बालः स्तुतिपक्षे शिशुपालः नाम्ना शिशुश्चासौ पालश्चेति पलसमूहः पालः मांसराशिः नतु कश्चित् तत्र धर्महेतुरिन्द्रियवर्गो जीवो वा तिष्ठति इति पलाशानामेव योग्यः कालस्यैतद्विपरीतं यदेतद्वाक्येनापि वृद्धानामपि बुद्धिः भेदं प्राप्स्यतीति स्वस्यानुगुणः काल इति एकोपि सभायां तथा विरुद्धं वदामीति ज्ञापितवान् एतत् द्वितीयं सभासदां दूषणम् ॥ ३१ ॥

पुनः स्ववाक्यश्रवणार्थं तान् स्तौति यूयं पात्रविदां श्रेष्ठा इति न केवलया विद्यया तपसा वापि पात्रतेति पात्रस्वरूपं ते जानन्तीति ते पात्रविदः तेषां श्रेष्ठाः पात्रसूक्ष्मविदः अत एव वा भाषितं मम सहदेवस्य माङ्गीकुरुत बालवाक्येन पात्रनिर्द्धारो न कर्त्तव्यः किन्तु स्वबुद्ध्यैव कर्त्तव्यः यतो यूयं सदसस्पतयः सभायां निवृत्तिहेतवः तादृशा एव सर्वे भवन्त इत्यपि स्तुतिः तादृशानामनुचितांशमाह कृष्ण इति कृष्णशब्दो दुष्टमुखान्निर्गतः मालिन्ययोगात् मलिनमेव वक्ति तथैव शिशुपालाभिप्रायश्च ततो योगात् तादृशः शिशुपाल एव भवति तादृशोऽयं यद्यस्मात् अर्हण समीपे सम्मतः तिष्ठत्विति सम्मतः इदं सभासदामुचितमित्यर्थः । यतो यज्ञे कालविलम्बो भविष्यति ॥ ३२ ॥

ननु भगवानपि क्षत्रियः सन्निहितबन्धुः ततश्च समीपस्थितौ को हेतुरिति चेत् तत्राह—तपोविद्याव्रतधरानिति । निन्दापक्षे लोकप्रसिद्ध एवार्थः तपोविद्ययोः पात्रलक्षण एव साधनं स्पष्टं व्रतस्यापि हेतुत्वमाचारहीनं न पुनन्ति वेदा इति व्रतशब्दो नियमवाचकः किं बहुना भगवद्व्रतपर्यन्तं व्रतधारका अत्र सन्ति पात्रगुणानुक्त्वा दोषाभावमाह ज्ञानविध्वस्तकल्मषानिति । ज्ञानाग्निः सर्वकर्माणीति वाक्यात् सर्वापेक्षया ज्ञानं पापनिवर्त्तकं एतावत्साधारणब्राह्मणेष्वपि सम्भवति यूयन्तु परमर्षयः मन्त्रद्रष्टारः अनेन पूर्वकाण्डप्रवर्त्तकत्वमुक्तं तत्रापि ब्रह्मनिष्ठाः उत्तरकाण्डस्य प्रवर्त्तकाः लोके च तथात्वेन सम्मता इत्याह—लोकपालैश्च पूजिता इति । लोकपानामपि फलं दातुं शक्ताः ॥ ३३ ॥

एतादृशान् सदसस्पतीनतिव्रज्येति अतिक्रमदोषोप्युक्तः तेषामेव समीपे स्थितिरुचिता न ममेति तत्र हेतुत्वेन स्वदूषणान्याह—गोपाल इति । यथा काक इति च पञ्चगुणा सदसस्पतिषु त्रयो दोषाः स्वस्य इन्द्रियपालकः भूपालको वा क्षत्रियाधमः दशवेश्यासमो नृप इति दोषश्रवणात् तत्रापि कुलपांसनः कुलाधमः येन चैद्यवंशः सर्वोपि निन्दितः ते तु आसहस्रात्पङ्क्तिं पुनन्ति किञ्च यथा काकः पुरोडाशं यदि कृष्णशकुनिरुपरि उपरि अतिपतेदिति सामीप्येपि दोषश्रवणात् स बहिः स्थितमेव बलिमर्हति नतु वेद्यां स्थितं पुरोडाशं तत्सामीप्येपि हविषो नाशात्तथा अहं सपर्यां पूजां सामीप्येन कथमर्हामि निन्दायान्तु बाल्ये ऽन्यायवृत्तित्वं पश्चात् परस्त्रीहरणादिना कीर्त्तिजनकत्वं यथा वा अकाकः पुरोडशं नार्हति कं सुखमकं दुःखम् उभयरहितः अकाकः शुकादितुल्यः स यथा पुरोडशं कर्ममार्गे नार्हति तथा अहमपि सपर्यां नार्हामीत्यर्थः । वेदरक्षकः कुलपान् कुलपवित्रकरणदक्षान् कुलरक्षकान् वा अंसे नयतीति सत्परिपालकत्वं निरूपितं भौतिककर्माध्यक्षत्वञ्च नार्हतीति भगवत्परत्वेपि केचिद्योजयन्ति तच्छब्ददुष्टत्वादुपेक्ष्यम् ॥ ३४ ॥

पुनः स्वनिन्दार्थं दूषणान्तरमाह—ययातिनेति । ययातिना हि चत्वारः पुत्रा निन्दिताः एकः पूरुः स्तुतः अथवा ययातिना एषां पाण्डवानां कुलं शप्तं यत्पुत्रवयसा मातुः सम्भोगः कृतः स कथं परम्परयापि दोषसम्बन्धात् कथं पूतो भवेत् अत एषां गृहे कथं भगवान् सपर्यामर्हेति सद्भिश्च तेन वा हेत्वन्तरेण वा विगर्हितं शश्वद्वृथापानरतञ्च एवमेतत्साधारणदूषणं तद्ययातिवंशोद्भवः सपर्यां समीपं वा कथमर्हति ॥ ३५ ॥

कुलनिन्दां कृत्वा कुलोद्भवं निन्दति—वर्णाश्रमेति । वर्णाः आश्रमाश्चत्वारः कुलं क्षत्रियत्वजातिः एतत् त्रितयेनाप्यपेतः भगवानेव वर्णाश्रमकुलरूप इति तदपेतः शिशुपाल इति तस्य तथात्वं सर्वैरेव धर्मैर्भगवद्विमुख्याद्बहिष्कृतः ततः स्वैरवर्त्ती स्वैर्बन्धुभिः सह वर्तनशीलोपि न भवति अन्यथा स्नेहमेव न कुर्यात् अत एव गुणैः तपआदिभिर्विहीनः सपर्यां समीपं वा कथमर्हतीत्यर्थः । केचिद्भगवत्पक्षेपि गुणातीत इति वर्णाश्रमकुलरहितत्वं देहाभावात् धर्मराहित्यं इन्द्रियाभावात् स्वैरवर्त्तित्वं स्वेच्छावर्त्तित्वं तेनान्तःकरणाभावश्चेति तेन त्रितयरहितः त्रितयसहितयोग्यसपर्यां कथमर्हतीत्याहुः ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हे सदसस्पतयः मा गृह्णीतेत्यर्थः । वाग्देवीमते दुर्योधनादिषु विपक्षेषु बालभाषितमिदं मा मन्यध्वं किन्त्विदमेव तत्त्वं वेदभाषितमित्यर्थः ॥ ३२ ॥

ब्रह्मर्षिसेवितान् देशान् हित्वैते ऽब्रह्मवर्चसम् ।
समुद्रं दुर्गमाश्रित्य बाधन्ते दस्यवः प्रजाः ॥ ३७ ॥
एवमादीन्यभद्राणि बभाषे नष्टमङ्गलः ।
नोवाच किञ्चिद्भगवान् यथा सिंहः शिवारुतम् ॥ ३८ ॥
भगवन्निन्दनं श्रुत्वा दुस्सहं तत्सभासदः ।
कर्णौ पिधाय निर्जग्मुः शपन्तश्चेदिपं रुषा ॥ ३९ ॥
निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा ।
ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः ॥ ४० ॥
ततः पाण्डुसुताः क्रुद्धा मत्स्यकैकयसृञ्जयाः ।
उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥ ४१ ॥
ततश्चैद्यस्त्वसम्भ्रान्तो जगृहे खड्गचर्मणी ।
भर्त्सयन् कृष्णपक्षीयान्राज्ञः सदसि भारत ॥ ४२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तपोविद्येत्यादि विशेषणानि सदसस्पतीन् प्रीणयित्वा स्वपक्षे स्थापयितुमुपन्यस्तानि ॥ ३३ ॥

मातुलवधादिना कुलपांसनः पक्षे कुत्सितं स्वपन्तीति कुलपाः श्वान् अंसयति घातयतीति सः यथावदेव न विद्यते कं सुखं अकं दुःखञ्च यस्य स इति प्राकृतसुखदुःखातीतस्वरूप इत्यर्थः पुरोडाशार्पणमात्रीं सपर्य्यामिन्द्रादिवत् कथमर्हति अपितु स्वात्मार्पणमेवेत्यर्थः ॥ ३४ ॥

वर्णाश्रमेति स्पष्टम् पक्षे वर्णाश्रमकुलानि आ सम्यक्प्रकारेण आप्नुवन्तीति वर्णाश्रमकुलापाः श्रीवसुदेवादयस्तैः पुत्रादित्वेन इतः प्राप्तः सर्वैर्धर्मैर्बहिष्कृतो रहितः स्वैरवर्त्ती च परमेश्वरत्वात् गुणैः सत्त्वादिभिर्हीनः शुद्धसत्त्वस्वरूपत्वात् एवम्भूतोऽयं सपर्य्यामात्रं कथमर्हति अपितु स्वात्मार्पणमपि ॥ ३५ ॥

ययातीति स्पष्टम् पक्षे ययातिना शप्तमपि सद्भिस्तस्मात् शापात् बहिष्कृतं ( किम् ) अत एव कार्तवीर्य्यादिभिः साम्राज्यमपि प्राप्तम् अत एव पानं पृथ्वीपालनं तत्र रतं तस्माद्वृथा सपर्य्या कथमर्हति अपितु सार्थकमेव ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

॥ २७—३१ ॥

हे सदसस्पतयः ! बालभाषितं मा मन्यध्वं मा जानीत मा गृह्णीत यत् कृष्णोऽर्हणे सम्मतस्तत् ॥ ३२—३६ ॥

---

भाषा टीका।

इस प्रकार श्रीकृष्ण के गुण वर्णन को सुनकर श्रीकृष्ण के गुण वर्णन से क्रोधित भया असहनशील निर्भय दमघोष का पुत्र शिशुपाल निज आसन ते उठकर सभा के बीच में भुजा को ऊपर उठाकर श्रीकृष्ण को कठोर वचन सुनावत यह बोलता भया ॥ ३१ ॥

"यह काल सबहि करने को समर्थ है इसी कारण इस का उल्लङ्घन नहि होसकता इस प्रकार काल की महिमाको कहने वारी श्रुति यथार्थ हि है इस काल के प्रभाव से ज्ञान वृद्ध वयो वृद्धन की बुद्धि सहदेव बालक के बचनों से भ्रान्त होती है ॥ ३२ ॥

हे सभापति औ आप सबहि पूजा पात्र को जानने वारे के मध्य में श्रेष्ठ हो इस वास्ते अग्रपूजा के निमित्त कृष्ण योग्य पात्र है इस सहदेव बालक के भाषकण को आप लोग ग्रहण मतना करो ॥ ३३ ॥

तप विद्या व्रत के धारण करने वारे और ज्ञान करके जिन के पाप नष्ट भये हैं तथा लोक पालों से पूजित एतादृश ब्रह्मनिष्ठ महर्षियों को छोड़कर ॥ ३४ ॥

तथा सभापतियों का अतिक्रमण करके जैसे देवतान का भाग पुरोडाशके योग्य काक नहि होता तैसे हि कुलको दाग लगाने वारा गौन के चराने वारा कृष्ण अग्रपूजा के योग्य कैसे होसकता है ॥ ३५ ॥

वर्ण आश्रम कुल ते भ्रष्ट तथा सब धर्म ते भ्रष्ट और स्वेच्छाचारी गुणों से हीन ऐसा यह कृष्ण अग्रपूजा के क्यों कर योग्य होसकता है ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

किञ्च ये राजानो दुष्टानुच्चाटयन्ति तदर्थं कीकटादिदेशानप्याश्रयन्ति एते तु ब्रह्मर्षिसेवितानेव देशानाश्रित्याब्रह्म-

तथेति गिरिशादिष्टो मयः परपुरञ्जयः ।
पुरं निर्माय शाल्वाय प्रादात्सौभमयस्मयम् ॥ ७ ॥
स लब्ध्वा कामगं यानं तमोधाम दुरासदम् ।
ययौ द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन् ॥ ८ ॥
निरुध्य सेनया शाल्वो महत्या भरतर्षभ ।
पुरीं बभञ्जोपवनान्युद्यानानि च सर्वशः ॥ ९ ॥
सगोपुराणि द्वाराणि प्रासादाट्टालतोलिकाः ।
विहारान् सविमानाग्र्यान्निपेतुः शस्त्रवृष्टयः ॥ १० ॥
शिलाद्रुमाश्चाशनयः सर्पा आसारशर्कराः ।
प्रचण्डश्चक्रवातोऽभूद्रजसाच्छादिता दिशः ॥ ११ ॥
इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम् ।
नाभ्यपद्यत शं राजंस्त्रिपुरेण यथा मही ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथेति क्रीडार्थं नरस्येव शरीरं यस्य तस्य अप्राकृतेन देहेनैव नरवद्विहरत इति भावः ॥ १—३ ॥

अन्वहम् सकृदेकवारम् ॥ ४ ॥

आशु तोषोपि श्रीकृष्णविद्विषं शाल्वं सम्वत्सरान्ते वरेण दित्सितेन छन्दयामास वरं वरयेति बोधयामास ॥ ५-६ ॥

---

भाषा टीका ।

हे नृप! अनन्तर लीला के वास्ते मनुष्य शरीर धारी श्रीकृष्ण के अन्यभी एक अद्भुत चरित्रको तुम सुनो जिस प्रकार श्रीकृष्णने शाल्वको मारा ॥ १ ॥

शिशुपालका सखा और रुक्मिणी के विवाह में आया शाल्व राजा युद्ध में यादवनने वह जीत लियारहा तथा जरासन्ध आदि राजाभी उनोने जीत लिये रहे ॥ २ ॥

उस समय सब राजान के सुनते २ शाल्वने यह प्रतिज्ञा करीहि कि मैं भूमिको यादव रहित कर दूंगा आप सब मेरे पुरुषार्थको देखियेगा ॥ ३ ॥

हे नृप! वह मूर्ख ऐसी प्रतिज्ञा कर के नित्यप्रति एक वार धूरिकी एक मुट्ठीका भोजन करत फल देने में समर्थ महादेवकी आराधना करता भया ॥ ४ ॥

शीघ्र प्रसन्न होने वारे उमापति भगवान् एक सम्वत्सर व्यतीत होने पर शरणागत शाल्वको वर मागने के वास्ते प्रेरणा करते भए ॥ ५ ॥

देव असुर मनुष्य गन्धर्व उरग राक्षस जन जिसका भेदन नहि करसकें तथा इच्छाचारी और यादवनको भय कारी ऐसा विमान शाल्वने महादेवजी से मागा ॥६॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तथेति प्रतिज्ञाय गिरिशेनाऽऽदिष्टोऽयस्मयं लोहमयं पुरं सौभसंज्ञं निर्माय रचयित्वा प्रादात् ॥ ७ ॥

तमसोऽन्धकारस्य धामाऽऽश्रयम् अन्यैर्दुरासदं दुष्प्रापम् ॥ ८—९ ॥

प्रासादा गृहा अट्टालास्तदुपरिगृहास्तोलिकास्तत्पर्यन्तकुड्यानि ताः विहारान् क्रीडास्थानानि च स समस्त किञ्च विमानाग्र्यास्तस्माच्छस्त्रवृष्ट्यादयः पेतुः ॥ १० ॥

आसारशर्कराधारा सम्पातवज्जलोपलाः ॥ ११ ॥

शं सुखं नाभ्यपद्यत ॥ १२-१५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

परपुरञ्जय इति । सौभसदृशपुरादिनिर्माणमय्या माययेति शेषः । पुरं तदाकारं महारथं प्रकर्षेण दैत्यपक्षत्वादुत्कृष्टया अदात् ॥ ७ ॥

तमोधामत्वादेव दुरासदं चक्षुषाप्यगम्यम् अत्र वृष्णिकृतं कृष्णकृतमिति पाठद्वयम् ॥ ८ ॥

निरुध्येतित्रिकम् । तत्र विहारान् स इत्यन्तमेकं वाक्यं शिष्ट इत्यन्तन्त्वन्यत् पुरीं श्रीद्वारकां निरुध्य सर्वतो बहिरावृत्य इतिमहाविस्मयात्सम्बोधयति—भरतर्षभेति । यद्वा अनिष्टाशङ्किनं तमाश्वासयति महावंशश्रेष्ठत्वेन त्वया श्रीभगवन्माहात्म्यं ज्ञायत एवेति कापि शङ्का न कार्येति भावः । बभञ्ज भङ्क्तुमुद्यतवान् "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" ॥ ९ ॥

गोपुराणि पुर्य्याबहिर्द्वाराणि तत्सहितानि द्वाराण्यन्यानि भञ्जनार्थमेव नितरां नैरन्तर्य्येणैव पेतुः प्रचण्डश्चासौ चक्रवातश्च वात्याविमानार्थमेव नितरां नैरन्तर्य्येणैव पेतुः प्रच-

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

ण्डश्चासौ चक्रवातश्च वात्या विमानान्यादेवाभूत् शीघ्रभ्रमणोर्जित्वात् रजसा चक्रवातभवेन ॥ १०—११ ॥

भृशमर्द्यमाना हिंस्यमाना श्रीकृष्णस्य पुरीति साश्चर्यदुःखवचनं तस्य दुर्बोधलीलस्य तादृश्येवेच्छेति भावः ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथेति । तथेत्यङ्गीकृत्य गिरिशेनादिष्टो मयः सौभं नाम अयोमयं लोहमयं पुरं निर्माय ददौ ॥ ७ ॥

स लब्ध्वेति । स साल्वः तमसोऽन्धकारस्य धामाऽऽश्रयं यानं लब्ध्वा अधिष्ठायेत्यर्थः । कृष्णस्य कृतं वैरं स्मरन् द्वारवतीं ययौ ॥ ८ ॥

निरुध्येति । हे भरतर्षभ ! पुरीं द्वारवतीं निरुध्य उपवनादीन् बभञ्ज ॥ ९ ॥

तत्राट्टलाः प्राकारोपरिगृहाः तोरणाः बहिर्द्वाराणि विहाराः क्रीडास्थानानि विमानान्यास्तस्मात्सौभाच्छस्त्रवृष्टयः शिलादयश्च निपेतुः ॥ १० ॥

तत्रासारो धारासम्पातः शर्कराः सूक्ष्मशिलाः प्रचण्डो निष्ठुरश्च वातो बभूव दिशश्च रजसाधूलिताः छादिताः बभूवुः ॥ ११ ॥

इतीति । इतीत्थं सौभेन यानेन भृशमर्द्यमाना पीड्यमाना कृष्णस्य नगरी द्वारका हे राजन् ! शं सुखं नाभ्यपद्यत न प्राप यथा त्रिपुरेणार्द्यमाना मही शं नाभ्यपद्यत तद्वत् ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

(मूलं) आययौ स्वं जनपदं सर्मग्रबलवाहनम् ।
इदानीं राजपुत्राणां स एवोद्योगवान्नृप ॥ क ॥
इति धर्मसुतः श्रीमान् श्रुत्वा तन्नारदोदितम् ।
पार्श्वे भगवतः शौरेः शनैर्मुखमवैक्षत ॥ ख ॥
निशम्य तद्वासुदेवो धैर्यसारो निराकुलः ।
किञ्चित्प्रहस्यास्तु नामेत्याह सा हि महात्मता ॥ ग ॥
पूजयित्वा ऋषिं सम्यक् सूनृतैर्गीर्भिरच्युतः ।
चिराभिलषितः सोपि प्राप्तः साध्वित्यचिन्तयत ॥ घ ॥
उग्रसेनं यदुपतिं युयुधानं च माधवः ।
अक्रूरं कृतवर्माणमन्यांश्च यदुपुङ्गवान् ॥ ङ ॥
प्रेषयामास रक्षार्थं द्वारवत्याः ससैनिकान् ॥ च ॥

श्रीविजयध्वजरीत्या चतुरशीति तमोऽध्यायः समाप्तः ॥

श्रीशुक उवाच ।

तथा वसति गोविन्दे शक्रप्रस्थे महात्मनि ।
ससानुजे चैव नृपे कृतकृत्ये युधिष्ठिरे ॥ छ ॥
आकर्ण्य शाल्वः सङ्क्रुद्धो दमघोषसुतं हतम् ।
जरासन्धश्च सुदृढं राजसूयं क्रतुं कृतम् ॥ ज ॥

अयस्मयं अयोमयम् "अयस्मयादीनिच्छन्दसि" (१-४-२०) इति पाणिनिः ॥ ७ ॥

नीलरश्मिपुञ्जात्मकत्वात्तमोधामेत्युच्यते ॥ क—ग ॥

सूनृतैः सूनृताभिः ॥ घ—ङ ॥

ससैनिकान् ससेनानायकान् ॥ च ॥

तथा महोत्सवसमेतत्वेन शाल्वः सङ्क्रुद्धो ऽभूदिति शेषः ॥ छ-ज ॥

आगत्य चान्तरिक्षे तं विमानमावसंस्तस्मिन्विमाने स्थितः युयुधे इत्यन्वयः सम्प्रहारप्रकारमाह—पुरीमिति ॥ ८—९ ॥

अट्टालोऽट्टः तोलिका वीथिका गृहपङ्क्तिमध्यपद्धतिरित्यर्थः । विहायस आकाशात् ॥ १० ॥

आसारो वेगवान्वर्षः तत्सहिताः शर्कराः क्षुद्रपाषाणाः चक्रवातो मण्डलवायुः ॥ ११ ॥

शं सुखम् ॥ १२—१६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वरमात्रसिद्धौ नित्यो भविष्यतीति अनित्यत्वे कृतकत्वं प्रयोजकमिति मयं प्रत्याज्ञां दत्तवानित्याह—तथेति । गिरिशादिष्ट इति परपुरञ्जय इति शत्रूणां पुरजयशीलः स हि जानाति पुरं जेयमजेयं च अतो यथा अजेयं तथा करिष्यतीत्यर्थः । अतस्तादृशं पुरं निर्माय शाल्वाय प्रादात् तस्य नामस्वरूपं आह—सौभमयस्मयमिति । सुष्ठु भा येषां ते सुभाः तेषां सम्बन्धि पुरं सौभम् उत्कृष्टलोहनिर्मितं दृढं भवति ॥ ७ ॥

ततः कृतार्थो भूत्वा युद्धार्थं द्वारकां समागत इत्याह—स लब्ध्वेति । कामगम इच्छामात्रेणैव इष्टदेशप्रापकं तमोधाम अन्धकारप्रचुरं तस्मिन्नन्धकारस्तिष्ठतीति स न दृश्यते पुरास्तं च केनापि प्राप्तुमशक्यम् एवं प्रासादेश्वरस्य भगवद्विरोध एव फलमिति द्वारवतीमेव ययौ वृष्णिकृतं वैरं रुक्मिणीहरणात्मकं शिशुपालवधात्मकञ्च पूर्वं दृष्टं श्रुतञ्च स्मरन् ॥ ८ ॥

ततो वैरेण यत्कृतवान् तदाह—निरुध्येति । सौभमात्रन्तु तस्य वरप्राप्तं सातु स्वाभाविक्यधिका अतस्तदा पुरीं निरुध्य उद्यानोपवनानि सर्वदा बभञ्ज ॥ ९ ॥

ततो दुर्गमध्येऽप्युपद्रवञ्चकृतवान् इत्याह—सगोपुराणीति । गोपुरद्वारसहितानीति द्वाराण्यालक्ष्यशस्त्रवृष्टयो निपेतुरिति सम्बन्धः बभञ्जेति केचित् प्राकारा अट्टालास्तोलिकाश्च प्राकारापर्वताः तोलिकाः छिद्रपङ्क्तयः यत्र स्थितैः पाषाणाः क्षिप्यन्ते प्रतोलिका वा शौभास्थानानि विहाराविश्रामस्थानानि तानि विमानान्यसहितानि तेषां भञ्जनार्थं तत्र स्थितपुरुषाणां पीडार्थं वा शस्त्रवृष्टयो निपेतुः साधारणमेतदुक्तम् ॥ १० ॥

दैत्ययुद्धमाह—शिलाद्रुमा इति । पाषाणा वृक्षाश्च बहिरुत्पाटिताः अन्तः प्रक्षिप्ताः अयनयोपि तस्य वरप्राप्त्या आसुरमायया तदधीनः तदा सर्पाश्च प्रासादशर्कराः प्रकृष्टासाररूपाः शर्कराः सूक्ष्मपाषाणवृष्टिं कृतवन्तः शिलाद्रुमास्तामसाः अशनयः सात्त्विकाः सर्पप्रासादशर्कराः राजसाः एवं त्रैविध्येन सर्व एव प्रकार उक्तः ततः कृत्रिममाह—प्रचण्डश्च चक्रवातः

प्रद्युम्नो भगवान् वीक्ष्य बाध्यमाना निजाः प्रजाः ।
माभैष्टेत्यभ्यधाद्वीरो रथारूढो महायशाः ॥ १३ ॥
सात्यकिश्चारुदेष्णश्च साम्बोऽक्रूरः सहानुजः ।
हार्दिक्यो भानुविन्दश्च गदश्च शुकसारणौ ॥ १४ ॥
अपरे च महेष्वासा रथयूथपयूथपाः ।
निर्ययुर्दंशिता गुप्ता रथेभाश्वपदातिभिः ॥ १५ ॥
ततः प्रववृते युद्धं शाल्वानां यदुभिः सह ।
यथाऽसुराणां विबुधैस्तुमुलं लोमहर्षणम् ॥ १६ ॥
ताश्च सौभपतेर्माया दिव्यास्त्रै रुक्मिणीसुतः ।
क्षणेन नाशयामास नैशं तम इवोष्णगुः ॥ १७ ॥
विव्याध पञ्चविंशत्या स्वर्णपुङ्खैरयोमुखैः ।
शाल्वस्य ध्वजिनीपालं शरैः सन्नतपर्वभिः ॥ १८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अभूदिति भ्रमं जनयतीति सिद्धतया च निरूपितं चक्रवातो वात्या रजसा रेणुसमूहेन दिश आच्छादिताः एवं प्राकार-तन्मध्यस्थितानां क्रियाविघातकं ज्ञानविघातकं च कृतवन्त इत्यर्थः ॥ ११ ॥

तेषामुपद्रवेण जातं फलमाह—इत्यर्थमानेति सौभेनाधमेन पीड्यमाना अतदर्हा यतः कृष्णनगरी अतिसुकुमारी शं नाभ्य-पद्यत निरोधात् न भक्तिमार्गविरुद्धं वर्णनं संजातमिति विश्वा-सार्थं पीडाया इयत्ता वक्तुं दृष्टान्तमाह—त्रिपुरेण यथा महीति ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सौभं सौभसंज्ञम् अयस्मयं लोहमयम् ॥ ७—९ ॥

तोलिका भित्तिः विहारान् क्रीडास्थानानि स शाल्वः ततश्च विमानश्रेष्ठात् सौभात् ॥ १०—१२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सौभसंज्ञम् पुरम् ॥ ७—९ ॥

स शाल्वः सगोपुराणि गोपुरसहितानि द्वारादीनि बभ-ञ्जेति शेषः तोलिका कुड्यानि विमानाग्र्यात्सौभात् शस्त्रवृष्टयश्च निपेतुः ॥ १० ॥

शिलादयश्च निपेतुरित्यनुषङ्गः असारेण जलधारासम्पातेन सह शर्करा जलोपलाः ॥ ११—१२ ॥

भाषाटीका ।

शाल्व के वर को अङ्गीकार कर महादेवजी ने शत्रुन के पुरको जीतने वारे मयदैत्य को उक्त विमान बनाने की आज्ञा दई उस मयने लोहे से निर्मित पुरके समान सौभ-नामा विमान को निर्माण करके शाल्व को दे दिया ॥ ७ ॥

इच्छाचारी और अन्धकार का धाम इसी से दुष्प्राप ऐसे विमान को प्राप्त होकर वह शाल्व यादवन के किये वैर का स्मरण करत द्वारकापुरी को जाता भया ॥ ८ ॥

हे भरतर्षभ ! बड़ी भारी सेनासे द्वारकापुरी को घेर कर शाल्व राजा सब उपवनों का और उद्यानों का भञ्जन करता भया ॥ ९ ॥

किले के दरवाजेन सहित अन्य दरवाजे महल अटाली पाश की भींति विहारस्थान इन सब का भी भञ्जन करता भया और उस श्रेष्ठ विमान ते शस्त्रन की वर्षा पडती भई ॥ १० ॥

तथा शिला वृक्ष विजली सर्प जलके धारापात ओले भी पडते भए तथा अति भयङ्कर पवन का चक्र होता भया और धूलीसे सबदिशा आच्छादित हो गई ॥ ११ ॥

हे राजन् ! इस प्रकार सौभ करके पीडाको प्राप्त भई श्रीकृष्ण की पुरी सुख को नहि प्राप्त हुई जैसे त्रिपुर करके भूमी सुख को नहि प्राप्त हुई रही ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तुमुलं व्याकुलम् लोमहर्षणं रौद्रम् ॥ १६ ॥
नैशं निशिभवं तमः उष्णगुः सूर्य इव ॥ १७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

किञ्च विव्याधेति स्वर्णमयानि पुङ्खानि पृष्ठप्रान्ता येषां तैः अयो लोहं तन्मयानि मुखान्यग्राणि येषां तैः ध्वजिनीपालं सेनान्यं सन्नतानि निम्नानि पर्वाणि ग्रन्थयो येषां तैः ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

बाध्यमानाः बाधितुमारभ्यमाणाः मामैष्टेत्यभ्यधात् अब्रवीत् यतो भगवान् स्वयं भगवत एव तृतीयव्यूहः तथा लौकिकलीलया च वीरः शूरः तत्रापि महारथः योधवर्गश्रेष्ठः तत् किमिदमाश्चर्यं किन्तु तादृशक्षुद्रैरपि लीलाकौतुकमिति भावः ॥ १३ ॥

सात्यकिरिति युग्मकम्। चारुदेष्णः प्रद्युम्नानुजः अक्रूरानुजाः आसङ्गसारमेयादयश्चतुर्दश भानुविन्दः श्रीसत्यभामाज्येष्ठपुत्रो भानुरेव शुकः कश्चित् सारणः श्रीरोहिणीसुतः चकारात् सर्वेषां निर्य्याणे प्राधान्यापेक्षया पुरीरक्षार्थं श्रीबलदेववसुदेवोग्रसेनादयोऽभ्यन्तर एवासन्निति ज्ञेयं रथादीनां यथापूर्वं सेनाङ्गत्वे गुप्तिसाधनत्वे च श्रेष्ठयम् ॥ १४-१५ ॥

साल्वानां साल्वदेशोद्भवानां यद्वा साल्वस्य (त्व) तदीयानामित्यर्थः ॥ १६ ॥

रुक्मिण्याः श्रीमद्देवीवर्गश्रेष्ठायाः सुतः ज्येष्ठपुत्रः इति माहात्म्यभरः सूचितः ॥ १७ ॥

स्वर्णपुङ्खैरित्यादिविशेषणैः शराणाङ्गाढवेधकत्वं सूचितम् ॥ १८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

उष्णगुः आदित्यः ॥ १७—२० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

प्रद्युम्न इति। भगवान् षड्गुणसम्पन्नः प्रद्युम्नः बाध्यमानाः पीड्यमानाः निजाः स्वकीयाः प्रजाः प्रेक्ष्य इतीत्यनन्तरमुक्त्वेति शेषः अभ्यधावदभ्यद्रवत् ॥ १३ ॥

तथा सात्यकिप्रभृतयोऽपरेच यदुवीरा महान्तः इष्वासाः धनूंषि येषां ते रथयूथपानामपि यूथपा दंशिताः कवचिताः रथादिभिश्चतुर्भिरङ्गैर्गुप्ताश्च निर्ययुः द्वारकाया इति शेषः ॥ १४-१५ ॥

तत इति। युद्धं प्रवृत्तमभूत् यथा विबुधैर्देवैः सह असुराणां तद्वत् कथम्भूतं तुमुलं व्याकुलं रोमहर्षणं शृण्वतामपि रोमोद्गमम् ॥ १६ ॥

ताश्चेति। याः शस्त्रवृष्ट्यादयो मायास्ताः क्षणेन नाशयामास उष्णा गावः किरणाः यस्य सः सूर्यो नैशं निशासम्बन्धि तमोऽन्धकारं नाशयति तद्वत् ॥ १७ ॥

विव्याधेति। स्वर्णमयाः पुङ्खाः पृष्ठप्रान्ताः येषां तैरयो लोहं तन्मयानि मुखान्यग्राणि येषां तैः सन्नतानि निमग्नानि पर्वाणि येषां तैः पञ्चविंशत्या शरैः साल्वस्य ध्वजिनीपालं सेनान्यं विव्याध ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

उष्णा गावो यस्य स उष्णगुः सूर्यः ॥ १७...१९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं महादेवप्रीत्यर्थं तस्योत्कर्षमुक्त्वा सर्वथा भग्नोपाय एव भगवत्परो भवतीति उपायान्तरं दूरीकर्त्तुं प्रद्युम्नादीनां रक्षार्थं युद्धमाह—प्रद्युम्न इति। तस्य प्रथमतो गमने हेतुर्भगवानिति भगवत्त्वात्स्वरूपज्ञानमुपायज्ञानञ्च निजाः प्रजा इति रक्षाभिनिवेशार्थमुक्तम् आदौ मनसा रक्षां विचारितवान् ततो वचनेनैवाभ्याह—मामैष्टेति। अभ्ययात् मुखतो मामैष्टेत्युक्त्वा पश्चात् रथेन युद्धदेशमभ्ययादित्यर्थः ॥ १३ ॥

तथा सात्यकिरपि चारुदेष्णः प्रद्युम्नभ्राता अक्रूरो भ्रातृसहितः हार्दिक्यादयो यादवाः गदादयो भ्रातरः शुकसारणौ दूतौ परं भ्रातरौ ॥ १४ ॥

अपरेच यादवाः महेष्वासाः धनुर्द्धराः रथयूथपानामपि यूथपाः दंशिताः रथादिभिः वेष्टिता निर्ययुः फलप्रकारत्वात्, लौकिकी भाषा फलं सर्वत्रानुभवसिद्धत्वात् लौकिकमेव अतः स्वतो महान्तः साधनसहिताः युद्धार्थं निर्गता इति स्वतः प्रतीकाराऽप्रवृत्तिः तद्भगवान् दूरीकरिष्यति लौकिकीभाषेयमिति न पूर्वविरोधः बलभद्रो विद्यमानोऽपि महादेवप्रेरितोऽयमित्युपेक्षत इति केचित् कचिदन्यत्र गत इति च ॥ १५ ॥

तत उभयोः शूरत्वख्यापनाय युद्धं वर्णयति—ततः प्रवर्त्तते युद्धमिति। बहुवचनं प्राणभृन्न्यायेन धामव्यपदेशन्यायेन वा उभयेषां युद्धे दार्ढ्यमाह यथाऽसुराणां विबुधैरिति असुराणां यथा देवैस्तुमुलमधिकं लोमहर्षणं प्रचण्डप्रहारयुक्तं यस्मिन् श्रुते रोमाञ्चो भवति ॥ १६ ॥

ततो मायया तैर्या बिभीषिका प्रदर्शिता तां प्रद्युम्नो निवारितवानित्याह—ताश्च सौभपतेर्माया इति। दिव्यास्त्रैराग्नेयादिभिः नारायणास्त्रेण पाशुपतेन वा मूलोच्छेदमकृत्वा अर्द्धप्राकृतबुद्ध्या युद्धं करोतीति अपरितोषेणाह—रुक्मणीसुत इति। यदर्थं कृतवान् तज्ज्ञातमित्याह—क्षणेन नाशयामासेति नैशं तमो रात्रेः सम्बन्ध्यन्धकारः सूर्यस्य सहजनिराकार्यः तेन निरायासेन निराकरणमुक्तम् ॥ १७ ॥

ततो विशेषयुद्धमाह—विव्याध पञ्चविंशत्येति। पञ्चविंशतितत्त्वात्मकाः सर्वे सर्वभावेन विद्धा इति ज्ञापयितुं साल्वस्य ध्वजिनीपालं सेनापतिं शरैर्विव्याध सुवर्णपुङ्खैरिति प्रत्यक्षातः शीघ्रनिर्गमनार्थम् अयोमुखैरिति उत्तमवेधार्थं मध्ये शराः सन्नतपर्वाणः ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

प्रद्युम्नो भगवान् वीक्ष्येति युद्धार्थं बलभद्रे विजिगीषति

शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान्।
दशभिर्दशभिर्नेतॄन् वाहनानि त्रिभिस्त्रिभिः॥ १९॥
तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः।
दृष्ट्वा तं पूजयामासुः सर्वे स्वपरसैनिकाः॥ २०॥
बहुरूपैकरूपं तद्दृश्यते न च दृश्यते।
मायामयं मयकृतं दुर्विभाव्यं परैरभूत्॥ २१॥
क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्ध्नि जले क्वचित्।
अलातचक्रवद्भ्राम्यत्सौभं तद्दुरवस्थितम्॥ २२॥
यत्र यत्रोपलक्ष्येत ससौभः सहसैनिकः।
शाल्वस्ततस्ततोऽमुञ्चञ्छरान् सात्वतयूथपाः॥ २३॥
शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः।
पीड्यमानपुरानीकः शाल्वोऽमुह्यत्परेरितैः॥ २४॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सति वयमेव शाल्वं वधिष्यामस्त्वया तु सुखेनात्रैव स्थेय मित्युक्त्वा साम्बादिभिः सह प्रद्युम्न एव निर्जगामेति ज्ञेयम्॥ १३—१६॥

नैशं निशाभवम् उष्णगुः सूर्य्यः॥ १७॥

ध्वजिनीपालं सेनान्यं सन्नतानि निम्नानि पर्वाणि ग्रन्थयो येषां तैः॥ १८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अभ्ययात् अभ्यद्रवत्॥ १३—१५॥

तुमुलं व्याकुलम्॥ १६—१८॥

भाषाटीका।

महायश वारा रथ पर बैठा शूर वीर प्रद्युम्न भगवान् अपनी प्रजानको पीडित देख कर बोला, कि-आप लोग भय मतना करो॥ १३॥

सात्यकि चारु देष्ण साम्ब अनुज सहित अक्रूर हार्दिक्य भानुविन्द गद और शुक सारण॥ १४॥

इन के सिवाय अन्यभी महा धनुष धारी रथ समूहके पालन करने वारेन के समूह कैसी रक्षा करते वारे महा रथोजन कवच धारण किये रथ हस्ती अश्व पयादेन से रक्षित होकर युद्ध के वास्ते द्वारकापुरी से निकसते भए॥ १५॥

पश्चात् जैसे पहले असुरनको देवतान के साथ युद्ध भया रहा तैसेहि शाल्व और उस के सेना वारेनका याद- वन के साथ संकुल तथा देखने सुनने वारेन के रोमांच खडे जिस से होजावें ऐसा युद्ध प्रवृत्त भया॥ १६॥

रुक्मिणी पुत्र प्रद्युम्न ने दिव्य अस्त्रों से शाल्वकी उन मायानको क्षण मात्र में इस प्रकार नाश कर दिया कि जैसे रात्रि के अन्धकारको सूर्य्य भगवान् नाश कर देते हैं॥१७॥

सुवर्ण के पुंख वारे लोहेकी भाल वारे नीची गाँठ वारे पचीस वाणों से प्रद्युम्नजी शाल्व के सेनापतिका बेधन करते भए॥ १८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

सैनिकान् भटान् नेतॄन् सारथीन्॥ १९॥

स्वपरसेनयोर्वर्तमानाः सर्वे पूजयामासुः सम्मानितवन्तः॥२०॥

कदाचिद्बहुरूपं कदाचिदेकरूपं क्वचिद्दृश्यते क्वचिन्न दृश्यते एवं दुर्विभाव्यं दुर्वितर्क्यमभूत्॥ २१॥

किञ्च क्वचिदिति एवं तद्दुरवस्थितञ्चाभूत्॥ २२—२३॥

अग्निवद्दाहकोऽर्कवद्दुगपत्सर्वतः संस्पर्शो येषां तैः आशीविषवदेकदेशस्पर्शमात्रेण मारकत्वाद्दुरासदैर्दुस्सहैः पीड्यमानं पुरमनीकानि च यस्य सः परैर्यदुभिरीरितैर्मुक्तैः॥ २४॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एकैकेनेति। प्रत्येकमेकैकेन शरेणेत्यर्थः। एवमग्रेऽपि॥ १९॥

अद्भुतं लोकातीतम् अतो महत् सर्वतः श्रेष्ठं तच्च तस्य नात्यद्भुतमित्याह महात्मनः अपरिच्छिन्नशक्तेरित्यर्थः॥ २०॥

ततश्च श्रीप्रद्युम्नभयात्तत्सौभमलक्ष्यमस्थिरञ्चाभूदित्याह-बह्विति द्वाभ्याम्॥ २१॥

क्वचित्कदाचित् गिरेः रैवतकस्य मूर्ध्नि॥ २२॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

उपहीने यत्किञ्चिदपि लक्ष्यते ॥ २३ ॥

अग्न्यः दाहकतया तद्रूपत्वेन रूपिता इत्यर्थः । अर्कसंस्पर्शा अर्कस्येव रश्मिद्वारा सर्वत्र संस्पर्शस्तापमयो येषां ते च तेच तैः ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मयामयम् आश्चर्यं द्रव्यमयं मूर्च्छित इति भयादपक्रमणं अकीर्त्तिकरं नतु मूर्च्छायामित्यर्थः ॥ २१—३३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

साल्वन्तु शतेन च बाणानामिति शेषः । अताडयत् सैनिकान् भटानेकैकेन शरेणाताडयत् नेतॄनवान्तरसेनानायकान् सारथीन् वा दशभिर्दशभिः शरैर्वाहनानि गजाश्वरथादीनि त्रिभिस्त्रिभिः शरैरताडयत् ॥ १९ ॥

तदिति । तत्प्रद्युम्नविक्रमात्मकं महदतिकौशलं कर्म दृष्ट्वा स्वपरसेनयोः वर्त्तमानाः सर्वे तं प्रद्युम्नं पूजयामासुः बहु मेनिरे ॥ २० ॥

बह्विति । तन्मयकृतं सौभं क्वचिद्बहुरूपं क्वचिदेकरूपं क्वचिच्च दृश्यते क्वचित्तु न दृश्यते एवं परैर्दुर्विभाव्यमवितर्क्यमभवत् ॥२१॥

किञ्च क्वचिदिति । एवं दुरवस्थितमनवस्थितञ्चाभूत् ॥ २२ ॥

यत्र यत्रेति । उपलक्ष्येत दृश्येत सात्वतयूथपाः यदुवीराः ॥२३॥

शरैरिति । अग्निवद्दाहकोऽर्कवत् संशोषकः युगपत्सर्वतः संस्पर्शो येषां तैराशीविषवत् स्पर्शमात्रेण दुरासदैः दुस्सहैः परैरितैर्यदुवीरप्रयुक्तैः शरैः पीड्यमानं पुरमनीकानि च यस्य सः साल्वोऽमुह्यत् मुमोह ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्य प्रद्युम्नस्य ॥ २०—२१ ॥

दुरवस्थितं नैकत्र स्थितमभूदिति शेषः ॥ २२ ॥

तस्य सौभस्य सैनिकः सेनासहितः शाल्वः यत्रयत्रोपलक्ष्येत सात्वतयूथपाः ततः शरानमुञ्चन्नित्यन्वयः ॥ २३ ॥

इति परैः शरैः प्रपीड्यमानः पुरस्थितानीकः ॥ २४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः शतेन शाल्वमताडयत् एकैकेन चास्य सैनिकान् दशभिः दशभिः सारथीन् अश्वांस्त्रिभिः त्रिभिः ॥ १९ ॥

एवमेकेन सर्वेषां प्रहारः अत्याश्चर्यत्वात् शत्रुभिरपि स्तुत इत्याह—तत्तस्येति । अद्भुतमाश्चर्यकरं मन्त्रसामर्थ्यात् पितृसामर्थ्याद्वा एतदिति पक्षं वारयति महात्मन इति स्वयमेव महानुभावः अत एवाश्चर्यं स्वस्य परस्य शत्रोश्च सैनिकाः ॥ २० ॥

ततः शाल्वः स्वयं युद्धं करिष्यतीति वक्तुं तस्य स्वरूपमाह—बहुरूपैकरूपमिति । कदाचित् बहुरूपं दृश्यते कदाचिदेकरूपं कदाचित् दृश्यते कदाचिन्न दृश्यत इति प्रमाणप्रमेययोरपि वैलक्षण्यमुक्तं तत्र हेतुः मायामयमिति तर्हि दिव्यास्त्रेण नाशं यास्यतीति अत आह—मयकृतमिति । तर्ह्यन्यैः तादृशैः सूक्ष्मेक्षितया तन्नाशोपायो ज्ञातो भविष्यतीत्याशङ्क्याह—परैरन्यैर्दुर्विभाव्यं तर्कितुमशक्यमभूदित्यर्थः ॥ २१ ॥

तस्य देशोपि दुर्लक्ष्य इत्याह—क्वचिद्भूमाविति । लक्ष्यं दृष्ट्वा पश्चाच्छस्त्रप्रयोगः तत्स्थिरे चरे च भवति चरेच लक्ष्यभूमिः ज्ञातुं शक्या भवति अस्य तु सर्वमेवाशक्यमिति लक्षणमात्रव्यवधानेपि विरुद्धे देशान् वर्णयति आकाशभूम्योरिति व्यवधानम् एवं गिरिमस्तकजलयोरपि अलातचक्रवत् भ्राम्यच्च भवति तेनाविद्यमानस्थलेपि दृश्यत इति तन्निराकरणार्थं न शस्त्रप्रयोगः कर्त्तुं शक्यः केनचिन्मन्त्रादिना तथात्वे तत्प्रतीकारेण प्रतिकर्त्तव्य इति शङ्कां वारयति तत्सौभं स्वभावत एव दुरवस्थितमिति ॥ २२ ॥

एवं माहात्म्यमुक्त्वा तादृशमपि यादवैर्निराक्रियत इत्याह—यत्रयत्रेति । उपलक्षणविषयापि यत्र प्रतीयेत ससौभः स शाल्वः सैनिकसहितश्च ततस्ततः सात्वतयूथपाः शरानमुञ्चन् तत इति तस्माद्देशात् शाल्वस्य गमनं सूचयति अन्यथा तत्र तत्रेत्युक्तं स्यात् ॥ २३ ॥

एवं सर्वतः शरप्रक्षेपे सूक्ष्मोपि गन्तव्यदेशो रुद्ध इति सौभं सैनिकाश्च शाल्वस्य पीडिता जाता इत्याह—शरैरग्न्यर्कसंस्पर्शैरिति । स्पर्शे अग्न्यर्काभ्यां तुल्यता पर्यवसाने आशीविषतुल्यता अत एव दुरासदैः अप्रतीकार्यैः शरैः पीड्यमानपुरमनीकाः सैनिकाश्च यस्य एतादृशः शाल्वः अमुह्यत तर्हि पलायनं तेषां प्रार्थना वा कर्त्तव्येति तत्राह परैरितैरिति शत्रुप्रेरिता एते बाणा अतः शत्रुजयो मरणं वा उपायः नान्य इति मोहं प्राप्तवान् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नेतॄन् सारथीन् ॥ १९ ॥

तत् सौभम् ॥ २०—२३ ॥

अग्न्यर्कयोरिव स्पर्शो येषां तैः आशीविषैः सर्पैरिव दुरासदैः दुस्सहैः पीड्यमानं पुरम् अनीकानि च यस्य सः परैः यदुभिरीरितैर्मुक्तैः ॥ २४—२५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नेतॄन् सारथीन् ॥ १९—२० ॥

माया अद्भुतरूपा मयशक्तिस्तन्मयं तया रचितम् अत एव दुर्विभाव्यमतर्क्यम् ॥ २१ ॥

दुरवस्थितमभूत् ॥ २२—२३ ॥

परैः शत्रुभिरीरितैः शरैः पीड्यमानं पुरमनीकञ्च यस्य

शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः ।
न तत्यजू रणं स्वं स्वं लोकद्वयजिगीषवः ॥ २५ ॥
शाल्वामात्यो द्युमान्नाम प्रद्युम्नं प्राक्प्रपीडितः ।
आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली ॥ २६ ॥
प्रद्युम्नं गदया शीर्णवक्षस्स्थलमरिन्दमम् ।
अपोवाह रणात्सूतो धर्मविद्दारुकात्मजः ॥ २७ ॥
लब्धसंज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् ।
अहो असाध्विदं सूत यद्रणान्मेऽपसर्पणम् ॥ २८ ॥
न यदूनां कुले जातः श्रूयते रणविच्युतः ।
विना मत्क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात् ॥ २९ ॥
किं नु वक्ष्येऽभिसङ्गम्य पितरौ रामकेशवौ ।
युद्धात्सम्यगपक्रान्तः पृष्टस्तत्रात्मनः क्षमम् ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सः मुह्यत् विस्मृतकार्याकार्योऽभूत् कथम्भूतैः अग्निवत्सद्यो मारकत्वात् अर्कवदनिवार्यत्वात् स्पर्शो येषां तैः आशीविषवदेकदेशस्पर्शमात्रेण मारकत्वाद्दुरासदैः दुस्सहैः ॥ २४ ॥

भाषा टीका ।

और सौ बाणों से शाल्वको ताडना करते भए तथा एक २ बाण से शाल्व के सेना वारेनको ताडना करते भए और दश २ बाणों से सेना पतीनको ताडना करते भए तथा तीन २ बाणों से वाहनोंको ताडना करते भए ॥ १९ ॥

महा बुद्धिमान प्रद्युम्न के उस अद्भुत कर्मको देख कर अपनी पराई सेना के सबहि जन प्रद्युम्न की बडाई करते भए ॥ २० ॥

मयदैत्यका किया भया वह शाल्वका आश्चर्य्य रूप विमान कभी अनेक रूप कभी एक रूप कभी तो दीखने लगे और कभी नहि दीखे इस प्रकार अन्य पुरुषोंको अतर्कणीय हो· जाता भया ॥ २१ ॥

वह सौभनाम विमान कभी भूमिपर कभी आकाश में कभी पर्वत के शिखर पर कभी जल में जैसे लुका के फिराने चक्राकार होजाता है तैसेहि वह विमान भ्रमण करत् एक स्थान में स्थित नहि रहा ॥ २२ ॥

सौभविमान सहित सेनापति सहित शाल्वराजा जहां जहां दीखा तहां तहांहि यादव समूह के रक्षक सेनापति बाण छोडते भए ॥ २३ ॥

अग्नि के सदृश दाह करने वारे सूर्य्य के तुल्य सर्वत्र एक काल में अति प्रचण्ड स्पर्श वारे सूर्य के समान दुःसह यादवन के चलाए भए बाणों से जिसका विमान और सेना पीडित होगए वह शाल्वराजा मोहको प्राप्त होगया ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भृशार्दिता अपि स्वं स्वं रणं स्वां स्वां युद्धभूमिम् ॥ २५ ॥
मौर्व्या कार्ष्णायसमय्या व्याहत्य प्रहृत्य ॥ २६ ॥
अपोवाहाऽन्यतो निनाय ॥ २७—२८ ॥
मत् मत्तो क्लीबं चित्तं यस्य तेन त्वया सूतेन ॥ २९ ॥
पितरौ रामकृष्णावभिसङ्गम्य तत्पार्श्वे गत्वा ताभ्यां पृष्टः स्वयोग्यं किन्नु वक्ष्यामीति ॥ ३० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

लोकद्वयस्य जिगीषवः क्षात्रधर्मप्रवर्त्तनार्थं यशोधर्मप्रवर्त्तनार्थं यशोधर्माद्यपेक्षकास्सन्तः यद्वा जगद्धितार्थं निजकीर्त्तिविस्तारेणोर्द्ध्वाधोलोकद्वयवशीकरणेच्छव इत्यर्थः ॥ २५ ॥

प्रद्युम्नाद्धेतोः प्राक् प्रकर्षेण पीडितः अस्त्रप्रहारेण दुःखितः विशेषेणाहत्य प्रहृत्य ॥ २६ ॥

अशीर्णवक्षःस्थलमप्यपोवाह किमर्थम् अरिन्दमं क्षणं विश्रम्य निजारिं दमयितुमित्यर्थः । तथापि रणादपवाहनमयुक्तं तत्राह धर्मवित् सारथिः रथिरक्षणधर्मं जानन् यतो दारुकस्यात्मजः ॥ २७ ॥

कार्ष्णिः तदपत्यत्वेन तद्वल्लीलावैचित्र्याकृष्टचित्त इत्यर्थः । अतो मोहाद्यनुकरणं सर्वं सङ्गच्छतैवेति भावः । अहो खेदे मे मम श्रीयादवेन्द्रसुतस्येत्यर्थः ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

क्लीबं पौरुषहीनं चित्तं यस्य तेन सूतेन त्वया हेतुना प्राप्तं त्वया किल्बिषं पापं येन तस्मात् ॥ २९ ॥

वैरिवधादिना स्वान् रमयतीति रामः केशवश्च हेलया केशिसूदनात् ताविति तयोर्महावीर्यत्वं सूचितं धर्मादिद्वयकृत्यत्वमुक्तम् आत्मनः क्षमं योग्यं कर्म ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

साल्वेति साल्वसैन्यपानां शस्त्रौघैः भृशं पीडिता अपि यदुवीराः स्वं स्वं रणं रणभूमिं न तत्यजुर्न त्यक्तवन्तः तत्र हेतुत्वेन विशिनष्टि-लोकत्रयमपि जेतुमिच्छवः ॥ २५ ॥

साल्वामात्य इति । द्युमान्नाम द्युमदाख्यः बली मौर्व्या कार्ष्णायसमय्या गुर्व्येति पाठान्तरं व्याहत्य प्रताड्य व्यनदत् ॥२६॥

प्रद्युम्नमिति । गदया तत्प्रहारेण विशीर्णं वक्षःस्थलं यस्य तं प्रद्युम्नं रणाद्रणस्थानादपोवाह अपसारयामास तत्र हेतुत्वेन सूतं विशिनष्टि-धर्मवित् सूतः कृच्छ्रगतं रक्षेद्रथिनम् इत्येवंविधधर्मवित् दारुकस्य कृष्णसारथेरात्मजश्च ॥ २७ ॥

लब्धसंज्ञ इति । तावन्मूर्छितस्ततो मुहूर्तेन लब्धा संज्ञा चेतना येन सः कार्ष्णिः प्रद्युम्नः सारथिमुवाच, उक्तिमेवाह-- अहो इति सार्द्धैस्त्रिभिः । हे सूत ! इदमसाधु किं तन्मम रणादपसर्पणम् इति यत् ॥ २८ ॥

कुतस्तस्यासाधुत्वमत आह--नेति । यदूनां कुले जातः कोपि रणाच्च्युतः पलायितः न श्रूयते किम्पुनर्न दृश्यत इति भावः । क्लीबमधृष्टं चित्तं यस्य तेन त्वया सूतेन हेतुना प्राप्तं कल्मषमयशो येन तस्मान्मन्मत्तः विनाऽन्यः कोपि रणाच्च्युतो न श्रूयत इति सम्बन्धः ॥ २९ ॥

किञ्च, किन्न्विति । रामकेशवावभिसङ्गम्य तत्पार्श्वं गत्वेत्यर्थः ताभ्यां पृष्टः न्याय्याद्युद्धादपक्रान्तः पलायितोऽहमात्मनः क्षमं योग्यं किन्नु वक्ष्यामि ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शाल्वस्यानीकपाः सेनानायकाः तेषां शस्त्राणामोघैः ॥२५-२६॥

"रथिनि प्राणसन्दिग्धे सारथीरथमाहरेत् ।

जीवयेद्युक्तः साधु युद्धकर्मविशारदः ॥

इति युद्धधर्मवित् ॥ २७ ॥

अपसर्पणम् अपसरणम् ॥ २८ ॥

कुतोऽसाध्वित्यतस्तत्राह--नेति मह्निना ॥ २९ ॥

धर्मसाधनाद्युद्धादपगतोऽहं पितृभ्यां पृष्टः तत्र पित्रोरात्मना मया कृतमक्षमं किन्नु कथं नु वक्ष्य इत्यन्वयः ॥ ३० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं यादवानां पौरुषमुक्त्वा शाल्वस्य सैनिकानामपि पौरुषमाह—तुल्यत्वाय शाल्वानीकपशस्त्रौघैरिति शाल्वस्याप्यनीकपाः सेनारक्षकाः तेषाञ्च शस्त्रौघाः तैः सर्वशः पीडिता अपि वृष्णिवीराः स्वं स्वं रणं न तत्यजुः अनेन भगवत्कृपया युद्धं जायत इति लक्ष्यते अपरित्यागे हेतुः लोकद्वयजिगीषव इति जये मरणे वा इह लोके कीर्त्तिः परलोके स्वर्ग इति अतो लोकद्वयजयार्थमपरित्यागः ॥ २५ ॥

एवं साधारणयुद्धमुक्त्वा प्रधानयुद्धमाह--शाल्वामात्य इति । अमात्यो मुख्यमन्त्री शाल्वतुल्यः नाम्ना द्युमान् कान्तियुक्तश्च पूर्वं प्रद्युम्नात्पीडितः सन् आसाद्य निकटे आगत्य मौर्व्या कृष्णलोहनिर्मितया तृणविशेषबद्धया वा गदया व्याहत्य ताडयित्वा व्यनदत् शब्दं कृतवान् जितं जितमिति यतो बली गदायां बलं प्रधानं तेन महती पीडा जातेति सूचितम् ॥२६॥

ततो यज्जातं तदाह-प्रद्युम्नमिति । शरीरस्यैव महती पीडा जाता यः कश्चनात्रापकर्षः स सर्वोपि महादेवसन्माननार्थः द्युमतः प्रसिद्धस्य गदया शीर्णं वक्षःस्थलं यस्येति स्वभावतोऽप्यप्रयोजकत्वं वारयति--अरिन्दममिति । तदा रणस्थानात् तस्य सूतः अपोवाह दूरे नीतवान् सोपि शत्रुपक्षपातीति शङ्काव्युदासार्थमाह—दारुकात्मज इति । तस्य भयाज्ञयनं वारयति धर्मविदिति ॥ २७ ॥

ततः किं जातमित्याकाङ्क्षायामाह—लब्धसंज्ञो मुहूर्त्तेनेति । मुहूर्त्तमात्रं मूर्च्छितः प्रद्युम्नस्य रुक्मिणीपुत्रत्वात् मातुलादिपक्षपाताद्वा ततो भगवदनुग्रहात् मुहूर्त्तानन्तरं लब्धसंज्ञः यतः कार्ष्णिः कृष्णपुत्रः अग्रे सारथिं दृष्ट्वा अनभिप्रेतं पलायनमिति बोधयन्नब्रवीत्—अहो इति । तस्य तिरस्कारवचनम् इदं मम अपसर्पणम् अत्यन्तमसाधु सर्वत्र निन्दितं सूतेति सम्बोधनं परिज्ञानार्थम् ॥ २८ ॥

ननु लोके पलायमाना अपि शूरा दृश्यन्ते तत्राह—न यदूनां कुले जात इति । रणस्थानादपसरणं न श्रुतपूर्वं मरणं वा जयो वेति न तृतीयः पक्षः नन्वद्य चेज्जातं तदापि व्याप्तिर्भङ्गैवेति आशङ्कायामाह—विनामत्क्लीबचित्तेन सूतेनेति अहमेवैकः सोपि सूतेन तथा जातः सूतोऽप्यद्यैव तथा ज्ञातः क्लीबचित्त इति अतः प्राप्तकल्मषोऽहम् ॥ २९ ॥

ननु, किमेतावता तत्राह—किन्नु वक्ष्य इति । पितरौ रामकेशवावभिसङ्गम्य नु इति वितर्के किं वक्ष्ये वचने प्रकारः कोपि नास्तीति ननु प्रहार एव वर्त्तते तत्राह युद्धाद्धर्म्यादपक्रान्त इति धर्मादनपेतं युद्धम् अतस्तस्मादपक्रमः अधर्मो भवति तर्हि तूष्णीं स्थातव्यमिति चेत्तत्राह—पृष्ट इति । तर्हि अशक्तिर्वक्तव्येति चेत् आत्मनः क्षममिति नहि मया अशक्तिर्वक्तुं शक्या ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रद्युम्नाद्धेतोः प्राक् प्रथमं पीडितः प्रद्युम्नप्रयुक्तेनास्त्रेण बाधितः मौर्व्या कार्ष्णायसमय्या ॥ २६ ॥

व्यक्तं मे कथयिष्यन्ति हसन्त्यो भ्रातृजामयः ।
क्लैव्यं कथं कथं वीर तवान्यैः कथ्यतां मृधे ॥ ३१ ॥

सारथिरुवाच ।

धर्मं विजानताऽऽयुष्मन् कृतमेतन्मया विभो ।
सूतः कृच्छ्रगतं रक्षेद्रथिनं सारथिं रथी ॥ ३२ ॥
एतद्विदित्वा तु भवान् मयाऽपोवाहितो रणात् ।
उपसृष्टः परेणेति मूर्च्छितो गदयाऽऽहतः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे
सौभवधो नाम
षट्सप्ततितमोऽध्यायः ॥७६॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तं प्रद्युम्नं श्रीणवक्षस्स्थलमिति प्रकृत्या द्युमतो गदया चिदानन्दमयवक्षसस्तस्य शीर्णत्वासम्भवेपि लीलाशक्त्यैव तस्य युद्धोत्साहरसवर्द्धनार्थमावेगमात्रे उत्पादिते तं गदयैव शीर्णवक्षःस्थलं मत्वा अपोवाह—अन्यत्र निनाय यतो धर्मवित् "सूतः कृच्छ्रगतं रक्षेत्" इति धर्मज्ञः वस्तुतस्तु प्रकारप्रश्लेषेण सच्चिदानन्दविग्रहत्वलक्षणं तस्य धर्मं न वेत्तीत्यधर्मवित् तच्च तद्दशातं तस्य परमसुसङ्कतमेव यतो दारुकात्मजः "परीक्षिति भवेद्रागो दारुकेच तथोद्धवे" इति श्रीभक्तिरसामृताके महाप्रेमवतो दारुकस्यात्मजः प्रद्युम्नविषयकमहास्नेहवानिति भावः ॥ २७ ॥

ततश्च लब्धा सम्यक् ज्ञा अनेन युद्धस्थलादहमपसारित इति ज्ञानं येन सः कृतावधान इत्यर्थः । यद्वा लब्धा संज्ञा, अर्थसूचना अपसारणव्यापारेण स्वमूर्च्छाज्ञापना सूतकर्ता येन सः अत एव तं प्रति कुपितस्सन्नब्रवीत् अभाविति "संज्ञा स्याच्चेतनानामहस्ताद्यैः स्वार्थसूचना" इत्यमरः । मुहूर्तेन क्षणेन॥२८॥
सूतेन त्वया हेतुना प्राप्तं किल्विषं कलङ्को येन तस्मात् ॥ २९ ॥
क्षमं योग्यम् ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रणं युद्धस्थानम् ॥ २५—२६ ॥
अपोवाह अपसारयामास ॥ २७—२८ ॥
क्लीबमधृष्टं चित्तं यस्य तेन प्राप्तकिल्बिषात् मत् मत्तो विना रणाद्विच्युतस्त्यक्तयुद्धस्थानः न श्रूयते ॥ २९—३० ॥

भाषा टीका ।

शाल्व के सेनापियों के बाण भवाहों से अत्यन्त पाडीतभी होगए तथापि इस लोक में विजय व कीर्ति तथा मरने पर स्वर्ग प्राप्ति इस प्रकार दोनों लोक के विजयकी काङ्क्षा वारे यदुवीर अपने अपने रणको नहि छोडते भए ॥ २५ ॥
शाल्वका प्रधान मंत्री द्युमान् नामा बली, पहले प्रद्युम्न से पीडित भया रहा इसी कारण निकट में आय कर मुर जाति के लोह से निर्मित गदा से प्रद्युम्न के ऊपर प्रहार करके गर्जना करता भया ॥ २६ ॥
वैरीनको दमन करने वारे प्रद्युम्नका वक्षस्थल गदा से भग्न होगया उसको दारुकका पुत्र धर्मका ज्ञाता सूत रणभूमि से वाहिर निकास लेगया ॥ २७ ॥
एक मुहूर्त्त में होंस होंने पर श्रीकृष्ण पुत्र प्रद्युम्न सारथि के प्रति बोला कि— हे सूत ! जो मेरा रण से भगना भया सो अत्यन्त अनुचित भया ॥ २८ ॥
कापर चित्त वारे तू सूत के निमित्त से अपयशको प्राप्त भया मेरे विना अन्य पुरुष यदुवंशीन के कुल में रणते भगा भया नहि सुना जाता है ॥ २९ ॥
युद्धते सम्यक् भगा भया मैं श्रीरामकृष्ण पितान के पास जाय कर उनोंने मोसे पूछातो वहां अपनो कोनसे योग्य कर्मको कहूंगा ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भ्रातृजामयो भ्रातृभार्याः व्यक्तं निश्चितं मत्क्लैव्यं कथयिष्यन्ति तत्कथनमनुकरोति-कथं कथमिति॥ ३१ ॥
विभो हे समर्थ ! एतदपसर्पणम् धर्ममाह—सूत इति ॥ ३२ ॥
अपोवाहितो ऽपनीतः उपसृष्ट उपसर्गं पीडां प्राप्त इति कृत्वा यतः परेण शत्रुणा गदया हतस्सन् मूर्च्छितो निस्संज्ञतां गतो भवानिति ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

एवं मम महती लोकधर्मविच्युतिर्जाता उपहासश्चातीवाभू-दित्याह व्यक्तमिति । मन्य इत्यर्थः । भ्रातरोऽत्र ज्येष्ठाः पितृव्यादिपुत्राः ज्ञेयाः क्लैव्यमित्यस्य परेणान्वयः अन्यैः शत्रुभिर्हेतुभिः तव दैन्यं कथमभूत् तत्त्वया कथ्यतां तत्र वीप्साच हे वीरेति चोपहासातिशयात् यद्वा अन्यैर्जनैः कथं कथ्यताम् अपितु नैकेनापि कथयितव्यमिति मा लज्जस्वेत्यर्थः । तदिदन्तु सारथिभर्त्सनार्थमेवारोप्य प्रोक्तं मर्मभेदकस्यैतद्वाक्यस्य तासिरात्मीयाभिरवक्तव्यत्वात् ॥ ३१ ॥

आयुष्मन्निति नित्ययोगे मतुप् हे सर्वकालव्यापक ! विभो ! हे सर्वदेशव्यापकेति त्वयि कथमप्यनिष्टशङ्का नास्त्येवेति भावः । तथापि कृतं कुतः धर्मं विशेषेण जानता कृच्छ्रगतं कष्टप्राप्तं सारथिश्च रथी रक्षेत् ॥ ३२ ॥

एतदिति । परेणोपसृष्टो गदया हतो मूर्च्छितश्चेत्येतद्विदित्वेत्यन्वयः । अपोवाहित इत्यस्मिन्नोकारमध्यत्वमार्षम् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च, व्यक्तमिति । मे मम भ्रातृजामयो भ्रातृभार्याः मृधे युद्धे प्राप्तं क्लैब्यं कथं कथं इति हसन्त्यः कथयिष्यन्ति व्यक्तं नूनं हे वीर ! तथाऽन्यैरपि कथं कथं कथ्यतां सम्भावनायां लोट् ॥३१॥

इत्थमुक्तः प्राह सूतः—धर्ममिति । हे विभो ! धर्मं वीजानतेति हेतुगर्भम् अतो मया एतदपसारणं कृतं कोसौ धर्मः ? तत्राह-सूत इति । कृच्छ्रगतं विपत्तिप्राप्तं रथिनं रक्षेद्रथीतु तथाभूतं सारथिमिति ॥ ३२ ॥

अस्त्वयं धर्मः किम्मयाऽधुना प्राप्तं कृच्छ्रं यतो मामपोवाहितवान् तत्राह-एतदिति । परेण शत्रुणा कर्त्रा गदया आहतस्ताडितः उपसृष्टः पीडां प्राप्तो मूर्च्छितश्चेत्येतद्विदित्वा उपसृष्ट इति पाठे परेणोपहिंसितेत्येतद्विदित्वेत्यर्थः । मया भवान् रणादपोवाहितः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किञ्चेदं दुस्सहमित्याह—व्यक्तमिति । जामयः सहोदर्यः कथं कथयन्तीति तत्राह—क्लैव्यमिति । हे वीर ! मृधेऽन्यैः सह कथं क्लैव्यं गतस्तत्कथ्यतामिति ॥ ३१ ॥

कोयं धर्म इति तत्राह—सूत इति ॥ ३२ ॥

उपसृष्टः उपद्रुतः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
( श्रीविजयध्वजतीर्थरीत्या पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
षट्सप्ततितमोऽध्यायः॥७६॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च सूतदोषेप्युक्ते कदाचित्पित्रा अङ्गीकर्त्तव्यं ननु भ्रातृपत्नीभिः हास्यस्वभावाभिरित्याह—व्यक्तं मे कथयिष्यन्तीति उक्तेप्युपाये विपरीतं ज्ञात्वा हसन्त्यो भविष्यन्ति ततो भ्रातृजामयः कुलस्त्रियः एवञ्च वक्ष्यतीत्याह-क्लैव्यं कथं कथं वीरेति । हे वीर ! विपरीतार्थं सम्बोधनम् अन्यैः सह ते क्लैव्यं कथं कथमिति श्रवणादरे वीप्सा क्लैव्यं वा कथयिष्यन्ति हानिकथनेप्युपहासः अन्यैः सह कथं कथमिति ॥ ३१ ॥

एवमुपालब्धस्य सूतस्य वचनं धर्मं विजानतेति धर्मस्वरूपमग्रे वक्तव्यं तर्हि मरणमस्तु किमित्यपसरणमिति चेत्तत्राह आयुष्मन्निति । आयुर्वर्त्तते एवं सत्युपेक्षा महद्दोषाय अत आयुर्धर्मश्च विजानता मयैतत्कृतं धर्ममाह सूतः कृच्छ्रगतं रक्षेदिति ममाप्येवं भावे त्वया रक्षणीय इत्युपदेशार्थं वचनम् ॥ ३२ ॥

इदं त्वया कुतोऽवगतमित्याशङ्क्याह—एतद्विदित्वा तु भवानिति । तुशब्दः अज्ञानादागमनं वारयति एतद्धर्मं ज्ञात्वैव भवान् रणादपोवाहितः । किं मम जातमित्याकाङ्क्षायामाह-उपसृष्टः परेणेति इति इत्यमुना प्रकारेण हृदयविदारणरूपेण परेणोपसृष्टः शत्रुणा ताडितः ताडनमाह गदया हतः ततो मूर्च्छित इति एतत् कृच्छ्रगमनम् अतो धर्मकीर्त्तिविरोधे धर्मो रक्षणीय इति सिद्धान्तः ॥ ३३ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभ
दीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
सप्तविंशाध्यायविवरणम् ॥२७॥७६॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भ्रातृजामयो भ्रातृभार्याः हे वीर । अन्यैः सह मृधे तव क्लैब्यं कथं कथमभूत् विस्मय इत्यर्थः ॥ ३१-३२ ॥

अपोवाहितः अपनीतः उपसृष्टः पीडित इत्यर्थः । यतो गदया हतो भवांस्तदानीं मूर्च्छितोऽभूत् इति ज्ञात्वैव मया अपोवाहितः ततश्च धिङ्मूढ मां नैव त्वमज्ञासीरिति प्रत्युक्तिर्ज्ञेया ॥ ३३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तिचेतसाम् ।
षट्सप्ततितमोऽध्यायो दशमेऽजनि सङ्गतः ॥ ७६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भ्रातृणां जामयो भार्याः ॥ ३१-३२ ॥

परेण शत्रुणा गदया हतः अत एव स्पृष्टः रथोपस्थे पतितो मूर्च्छितो गतसंज्ञः अतः सूतः कृच्छ्रगतं रथिनं रक्षेदिति एतद्विदित्वा मयाऽपोवाहितोऽपनीतः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षट्सप्ततितमोऽध्यायार्थप्रकाशः ॥ ७६ ॥

---

भाषा टीका ।

और मेरी भौजाई हँसती भई यह स्त्रियहि कहेंगी कि हे वीर ! युद्ध में शत्रुओं से तुमको व्याकुलता किस प्रकार भई जिस कारण तुम रण से भग दिए सो कहियेगा ॥ ३१ ॥

सूत उवाच ।

हे आयुष्मन् ! हे विभो ! धर्म के ज्ञाता मैंने रण से आप को बाहिर निकास दिया है क्योंकि यह धर्म है कि जो रथी कष्टको प्राप्त होजावे तो उसकी रक्षा सूत करै और जो सूत कष्टको प्राप्त होजावे तो उसकी रक्षा रथी करै ॥ ३२ ॥

शत्रु ने आपको गदाका प्रहार किया उस से मूर्च्छित होकर आप पीडित होगए यह जान कर मैंने आपको रण से बाहिर निकास दिया ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें छिहत्तरके अध्यायकी
भाषाटीका समाप्ता ॥ ७६ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

## सप्तसप्ततितमोऽध्यायः ।

### श्रीशुक उवाच ।

विज० पाठः (इति सूतोदितां वाणीमाकर्ण्य यदुनन्दनः ।
पुनरात्तप्रहरणः सूतमाह रणाङ्गणे ॥०॥)

(१) स उपस्पृश्य सलिलं दंशितो धृतकार्मुकः ।
नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥ १ ॥

(२) विधमन्तं स्वसैन्यानि द्युमन्तं रुक्मिणीसुतः ।
प्रतिहत्य प्रत्यविध्यन्नाराचैरष्टभिः स्मयन् ॥ २ ॥

चतुर्भिश्चतुरो वाहान् सूतमेकेन चाहनत् ।
द्वाभ्यां धनुश्च केतुं च शरेणान्येन वै शिरः ॥ ३ ॥

(३) गदसात्यकिसाम्बाद्या जघ्नुः सौभपतेर्बलम् ।
पेतुः समुद्रे सौभेयाः सर्वे सञ्छिन्नकन्धराः ॥ ४ ॥

एवं यदूनां शाल्वानां निघ्नतामितरेतरम् ।
युद्धं त्रिनवरात्रं तदभूत्तुमुलमुल्बणम् ॥ ५ ॥

इन्द्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना ।
राजसूयेऽथ निर्वृत्ते शिशुपाले च संस्थिते ॥ ६ ॥

---

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तयुक्सप्ततितमे नानामायाविचक्षणः ।
कृष्णेनाऽऽगत्य शाल्वस्तु हतः सौभश्च चूर्णितम् ॥

दंशितः सन्नद्धः ॥ १ ॥

विधमन्तं क्षपयन्तं प्रतिहत्य प्रतिरुध्य ॥ २ ॥

अष्टानां विनियोगमाह—चतुर्भिरिति ॥ ३ ॥

सौभेयाः सौभस्थाः ॥ ४ ॥

नवानां रात्रीणां समाहारो नवरात्रम् त्रयाणां समाहारस्त्रिनवरात्रम् सप्तविंशतिमहोरात्राणीत्यर्थः । तुमुलमाकुलम् उल्बणं घोरम् ॥ ५ ॥

पुरमतमुपन्यस्यति-इन्द्रप्रस्थं गत इत्यादिना ॥ ६—७ ॥

---

#### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तुशब्दो भिन्नोपक्रमे दंशित इति सल्लक्षणार्थं मध्ये सूतेनोत्तारणाद् धृतमुद्यतं कार्मुकं येन सः इति परमोत्साहो दर्शितः अतस्तत्रैव नयने हेतुमाह—वीरस्येति ॥ १ ॥

प्रतिहत्य स्वसैन्यं रुन्धानं तं तस्मान्निरुद्ध्य प्रत्यविध्यत तत्कृतवेधप्रतियोगितयाविध्यत नाराचैर्बाणविशेषैः स्मयन् स्मयमान इति वीरस्वभावत्वेनोत्साह एव जातो नतु क्रोध इति श्लाघितम् ॥ २ ॥

वै समुच्चये शिरोपीत्यर्थः ॥ ३ ॥

न केवलं स एव स्वविक्रमं दर्शयामास तेन विवर्द्धितोत्साहा अन्येपि यदुवीरा इत्याह—गदेति । सर्वे प्रायश इत्यर्थः ॥ ४ ॥

त्रिनवरात्रं व्याप्य ॥ ५ ॥

इन्द्रेति युग्मकम् । आहूत इवाहूतः श्रीनारदद्वारा तादृशविज्ञापनात् राजसूय इत्यादिरिन्द्रप्रस्थगमनप्रयोजने सर्वस्मिन्

---

(१) एवय सूत द्युमानेषः (२) आद्रवन्तम् (३) गदसात्यकिरक्रूरः साम्बश्च शुकसारणौ । वसुदेवोग्रसेनौच जघ्नुस्सौभपतेर्बलम् ॥ इति च विज० पाठः

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

समाप्त इत्यर्थः । अथेति चेति वा पाठः निमित्तानि पथि पश्यन् ॥ ६—७ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

॥ १—१० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ पुनः सन्नद्धेन प्रद्युम्नेन द्युमति हते सति यदुषु च युध्यमानेषु भगवानागत्य साल्वं जघानेत्याह सप्तसप्ततितमेन—सत्विति । सतु प्रद्युम्नः सलिलमुपस्पृश्याचम्य मूर्च्छात उत्थितत्वादिति भावः। दंशितः सन्नद्धः धृतं कार्मुकं धनुर्येन सः सारथिमाह—किमिति । वीरस्य द्युमतः पार्श्वं समीपं मां नय प्रापयेति ॥ १ ॥

विधमन्तमिति । रुक्मिणीसुत इत्यस्य द्युमत्पार्श्वे गत इत्यादिः स्वसैन्यानि विधमन्तं ताडयन्तं द्युमन्तं प्रतिरुध्य सन्निरुध्य स्वयत्नेनेनानायासः सूच्यते अष्टभिः शरैः प्रत्यविध्यत् प्रत्यताडयत् ॥ २ ॥

तत्राष्टानां विनियोगमाह—चतुर्भिरिति । वाहानश्वानेकेन कार्मुकम् एकेन ध्वजम् एकेन सूतम् एकेन तु द्युमच्छिरो ऽहनत् ॥ ३ ॥

गदेति । गदप्रभृतयो यादवाः सौभपतेर्बलं जघ्नुः सौभेयाः सौभस्थाः सर्वे संच्छिन्नाः कन्धराः येषां ते समुद्रे पेतुः पतितवन्तः ॥ ४ ॥

एवमिति । इतरेतरं परस्परं निघ्नतां सम्बन्धि तद्युद्धं त्रिनवरात्रमभूत् नवानां रात्रीणां समाहारः नवरात्रं त्रयाणां समाहारस्त्रिनवरात्रं सप्तविंशत्यहोरात्राणीत्यर्थः । तुमुलमाकुलमुल्बणं घोरम् ॥ ५ ॥

अत्र कैश्चिद्दर्विभिरुक्तं दूषयितुमनुवदति शुकः—इन्द्रप्रस्थहत्या-दिना एवं वदन्ति राजर्षयइत्यतः प्राक्तनेन । धर्मसूनुना युधिष्ठिरेणाहूतः श्रीकृष्णः राजसूये सम्वृत्ते परिसमाप्ते सति शिशुपाले संस्थिते मृते च सति तत्रैव कतिचिद्दिनानि स्थितः अतिघोराणि निमित्तानि पश्यन् कुरुवृद्धादीन् भीष्मादीन् ससुतां पृथां कुन्तीं मुनींश्चामन्त्र्य पृष्ट्वा द्वारवतीं ययावाइत्युत्तरेण सम्बन्धः ॥ ६—७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यदूनानन्दयतीति यदुनन्दनः एष द्युमान् दंशितो रणाङ्गणे आस्ते इति शेषः ततः किं तत्राह—नयेति ॥ ० ॥

॥ १—४ ॥

त्रिनवरात्रं सप्तविंशद्रात्रम् ॥ ५ ॥

अस्मिन्नवसरे कृष्णागमनं चाक्ति—इन्द्रप्रस्थमिति ॥ ६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥१—२९ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

१—२२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अष्टाविंशेतिपीडायां भगवत्स्मरणे कृते ।
तत् दुःखवारणं कृष्णश्चकारेति निरूप्यते ॥
द्युमतोपि वधं कृष्णश्चेत्कुर्यात् स्वयमागतः ।
तदा प्रद्युम्नदुःखस्य न निवृत्तिर्भवेत्कचित् ॥
अतः प्रद्युम्नहस्तेन मारणं तस्य रूप्यते ।
भक्तानां दुःखदानन्तु न युक्तमिति वै हरिः ॥
मतान्तरेणाशक्यत्वं बोधयामास वाक्यतः ।
अन्यथा श्रीशुको लीलां तादृशीं नैव वर्णयेत् ॥
तादृग्लीलान्तरमिव वर्णितां वा न दूषयेत् ।
एवंसिद्धान्तमज्ञात्वा लोको भ्राम्यति सर्वथा ॥
कल्पान्तरे तथा चक्रे सूक्ष्मांशस्यावतारतः ।
तिरोधे यदि नो ब्रूयात्सिद्धान्तो हि विरुध्यते ॥
शास्त्रार्थे दोषनाशाय निराकरणमुच्यते ।
अतः स्कन्धार्थशास्त्रार्थौ पक्षाभ्यामिह रूपितौ ॥

पूर्वाध्यायान्ते द्युमतापकर्षे पश्चात्तापो निरूपितः प्रद्युम्नस्य तदानीं द्युमद्वधार्थं प्रवृत्तिरुच्यते स उपस्पृश्येति मूर्च्छानन्तरं तथा कर्त्तव्यमिति सलिलोपस्पर्शनमाचमनं स्नानमित्येके ततः पुनर्दंशितः बद्धकवचः नारायणकवचादिनां लौकिकेन च ततो धृतकार्मुकः अनेन पूर्वं कवचरहितएव स्वपौरुषाभिमानो गत इति लक्ष्यते अत एव गर्वनाशार्थं भङ्गोपि ततः मां द्युमतः पार्श्वं नयेति सूतं प्रतिवचने शत्रोः प्रशंसामाह वीरस्येति ॥ १ ॥

सतु वञ्चितः सन् लज्जया आक्रोशेन मारित इति दोषव्यावृत्त्यर्थमाह—विधमन्तं स्वसैन्यानीति । स्वबलघातकत्वात् मारणीय एवेत्यर्थः । तथाप्याक्रोशेन मारणादाह—रुक्मिणीसुत इति । प्रतिहत्य अन्विष्य भर्त्सयित्वा वा अष्टभिर्नाराचैः प्रत्यविध्यत् ससामग्रीकं नाशितवानेवेत्यर्थः । स्वयमिति अधुनास्य च द्रष्टव्यमित्यर्थः ॥ २ ॥

अष्टबाणानां विनियोगमाह-चतुर्भिश्चतुरो वाहानिति । द्युमतः शिरः अन्येनाष्टमेन यानारुह्य येन प्रेरितो येन करणेन च येन लभ्यः प्रतिष्ठः तत्सर्वमाच्छिनत् ॥ ३ ॥

ततोऽन्येपि प्रधाने मारिते तद्बलं मारितवन्त इत्याह—गदसात्यकिशाम्बाद्या इति गदया प्रद्युम्नो मारित इति स्वबलेन तत्सैन्यं मारितवन्तः गदायामेव शौर्यं बलञ्च व्यापृतं भवति ततः सौभेयाः सर्वे अन्तरिक्षे युद्धार्थमागताः पलायमाना वा समुद्रे पतिताः सञ्छिन्नकन्धराः सन्तः ॥ ४ ॥

एवं भगवत्प्रतीक्षार्थं यदैव शाल्वानां जयाय जयरहितानां युद्धानुवृत्तिमाह-एवं यदूनामिति । इतरेतरं निघ्नतामिति

कुरुवृद्धाननुज्ञाप्य मुनींश्च ससुतां पृथाम्।
निमित्तान्यतिघोराणि पश्यन् द्वारवतीं ययौ ॥ ७ ॥
आह चाहमिहायात आर्यमिश्राभिसङ्गतः।
राजन्याश्चैद्यपक्षीया नूनं हन्युः पुरीं मम ॥ ८ ॥
वीक्ष्य तत्कदनं स्वानां निरूप्य पुररक्षणम्।
सौभं च शाल्वराजञ्च दारुकं प्राह केशवः ॥ ९ ॥
रथं प्रापय मे सूत शाल्वस्यान्तिकमाशु वै।
सम्भ्रमस्ते न कर्तव्यो मायावी सौभराडयम् ॥ १० ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

समता त्रिनवरात्रं सप्तविंशत्यहोरात्रं तुमुलमत्याक्रोशयुक्तम् उल्बणं क्रूरञ्च ॥ ५ ॥

एवं यादवानां दुरत्ययं व्यसनं गतानां महद्दुःखं निरूप्य भगवत एवमपेक्षा युक्तेति दोषपरिहारार्थं मतान्तरमारभते इन्द्रप्रस्थं गत इति। मतान्तरे पूर्वोक्तन्यायेन गमनागमनेनापि सम्भ्रमस्तथा तदर्थं तत्रत्यां कथामेवाह—धर्मसूनुना आहूतः स्वयमेकाकी इन्द्रप्रस्थं गतः पश्चाद्बलभद्रोऽप्याहूतः मानभङ्गस्तु तस्मिन् काले नास्ति विद्यमानेपि प्रकारान्तरेण वा भविष्यति अतः बलभद्रसद्भावोपि न दोषाय ततो राजसूये निवृत्ते भिन्नप्रक्रमेण समाप्ते शिशुपाले च मृते तदनन्तरमेव ॥ ६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

सप्तसप्ततितमे हरिरिन्द्रप्रस्थतो निजपुरीं समुपेत्य।
साल्वमात्तबहुमायमरिन्द्राक्सौभसंक्रमरिणैव जघान ॥

सत्विति। सूतेन सारथ्यधर्मसावधानेन तथा कृतं स प्रद्युम्नस्तु क्षात्रधर्मप्रवीणो। रणविच्युतिरूपप्रत्यवायपरिहारार्थं सलिलमुपस्पृश्य दंशितः धृतकवचः ॥ १ ॥

प्रतिहत्य देरे यावत्सामर्थ्यं प्रहरेत्युक्त्वा तदस्त्रघातानन्तरं तस्मै प्रत्यस्त्रघातं समर्प्येत्यर्थः। नाराचैः शरैः ॥ २ ॥

अश्वानां विनियोगमाह—चतुर्भिरित्यादि ॥ ३ ॥

सौभेयाः सौभस्थाः ॥ ४ ॥

त्रयाणां नवरात्राणां समाहारस्त्रिनवरात्रं सप्तविंशतिमहोरात्राणि व्याप्येत्यर्थः ॥ ५-७ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सप्तसप्ततितमे शाल्वं भगवानवधीदित्याह—तत्रादौ पराभूत्य प्रद्युम्नो यत्कृतवान् तदाह—स इति। उपस्पृश्य आचम्य दंशितः सन्नद्धः ॥ १ ॥

विधमन्तं क्षपयन्तं प्रतिहत्य प्रत्यध्यत प्रत्यताडयत् ॥२—३॥ सञ्छिन्नाः कन्धराः येषां ते सौभेयाः सौभस्थाः ॥ ४ ॥

नवानां रात्रीणां समाहारः त्रिनवरात्रं सप्तविंशतिमहोरात्राणि व्याप्येत्यर्थः ॥ ५ ॥

इन्द्रप्रस्थमित्यादिना एवं वदन्तीत्यन्तेन परमतमुपन्यस्यति ॥ ६—७ ॥

### भाषाटीका।

श्रीशुक उवाच।

जल का आचमन करके कवच धारण कर धनुष धारणकर यह प्रद्युम्न सारथि के प्रति बोला कि शूरवीर द्युमान् के पाश मोकों तू लेचलो ॥ १ ॥

द्युमान् के पास प्राप्त भया रुक्मिणी पुत्र सेना के नाश करने वारे द्युमान्को घेर कर हँसता भया आठ बाणों से द्युमान के ऊपर प्रहार करता भया ॥ २ ॥

चार बाणों से चार अश्वन को और एक बाण से सूतकों मारता भया दो बाणों से धनुष और ध्वजा को काट देता भया एक बाण से उसके शिर को काट देता भया ॥ ३ ॥

गद सात्यकी साम्ब आदि वीर लोग शाल्व की सेना को मारते भए सौभ विमान पर बैठे भए शाल्व के पक्ष के सवहि कन्धा कट२ कर समुन्द्र में गिरते भए ॥ ४ ॥

इस प्रकार यादव और शाल्व के तर्फ के वीरों को परस्पर मारते२ सत्ताईस दिन रात्रि पर्य्यन्त संकुल भयंकर युद्ध होता भया ॥ ५ ॥

युधिष्ठिर से बुलाए भए श्रीकृष्ण इन्द्रप्रस्थ को पधारे है वहां शिशुपाल के मरने पर और राजसूय यज्ञ के समाप्त होने पर कुछ दिन पर्य्यन्त वहां हि रहगए रहें ॥ ६ ॥

### श्रीधरस्वामीकृतभावार्थदीपिका।

आहचेति स्वगतमेव पथि चिन्ताविजृम्भितभाषणम् आर्यमिश्राभिसङ्गतो बलभद्रसहितः ॥ ८ ॥

इत्युक्तश्चोदयामास रथमास्थाय दारुकः ।
विशन्तं ददृशुः सर्वे स्वे परे चारुणानुजम् ॥ ११ ॥
शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः ।
प्राहरत्कृष्णसूताय शक्तिं भीमरवां मृधे ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुर्निमित्तदर्शनाकुलचित्तः एवं चिन्तयन् द्वारकामागत्य स्वानां कदनं वीक्ष्य सौभञ्च शाल्वराजञ्च वीक्ष्य रामं पुररक्षणं प्रति निरूप्य नियुज्य दारुकं प्राहेत्यन्वयः ॥ ९ ॥

ते त्वया ॥ १० ॥

आस्थाय सम्यगधिष्ठाय अरुणानुजं ध्वजे वर्त्तमानं गरुडम् ॥ ११ ॥

हतप्रायस्य बलस्य सैन्यस्येश्वरः ॥ १२—१३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आर्य्यो गुरुः श्रीबलभद्रः स एव मिश्रः पूज्यः यद्वा आर्य्येण तेन मिश्राः सहिता ये तैरपि सङ्गतः ॥ ८ ॥

वीक्ष्येति टीकायां दुर्निमित्तेत्यादिकमागत्येत्यन्तमध्याहृतम् ॥ ९ ॥

वै एव आश्वेव सम्भ्रमः सोऽवसानुभावः आवेगो न कर्त्तव्यः यतो मायावी ननु स्वतो वीरः सौभेन च मायामयेनैव राजत इति तथा ॥ १० ॥

विशन्तं युद्धभितिशेषः ॥ ११ ॥

हतप्रायबलेश्वरोपि मृधे प्राहरत् प्रहारार्थं चिक्षेप ॥ १२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अरुणानुजं ध्वजस्थगरुडम् ॥ ११—१४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तिमेवाह-आहचेति । आर्यमिश्रो बलभद्रः तेनाभिसङ्गतः सहितोऽहम् इहागतः चैद्यपक्षीया राजन्या मम पुरीं हन्युर्नाशयेयुः अतोऽहं गमिष्यामीति शेषः ॥ ८ ॥

वीक्ष्येति । अस्यागमनानन्तरम् इत्यादिः स्वानां तत्कदनं युद्धं सौभं साल्वं च वीक्ष्य रामं पुररक्षणं प्रति निरूप्य नियुज्य दारुकं प्राहेत्यन्वयः ॥ ९ ॥

उक्तिमेवाह—रथमिति । हे सुत ! साल्वस्यान्तिकं प्रत्याशु रथं प्रापय तेन साल्वेन सह सङ्ग्रामः कर्त्तव्यः अयं साल्वो मायावी सौभराट्चेति ॥ १० ॥

इतीति । आस्थाय सम्यगधिष्ठाय चोदयामास गमयामास अश्वानितिशेषः । अरुणस्यानुजो यस्मिंस्तं गरुडध्वजं रथं विशन्तं रणभूमौ इतिशेषः स्वे यदवः परे शाल्वपक्षीयाश्च ददृशुः ॥ ११ ॥

साल्व इति । हतप्रायस्य बलस्येश्वरः युद्धे साल्वः कृष्णमवलोक्य सीमो रवो ध्वनिर्यस्यास्तां शक्तिं कृष्णस्य सूताय प्राहरत् प्रायुङ्क्त ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अलक्षयद्दुःशकुनान् घोरान् सङ्ग्रामशंसिनः ॥ क ॥
कुरुवृद्धाननुज्ञाप्य मुनींश्च ब्राह्मणैः सह ।
अन्वीयमानः सामात्यैः पाण्डवैर्निर्ययौ पुरात् ॥ ख ॥
स गत्वा किञ्चिदध्वानं स्थापयित्वा पुरौकसः ।
पृथासुताननुज्ञाप्य प्रणतानश्रुलोचनान् ॥ ग ॥
सुवर्णशिबिकारूढैरवरोधवधूजनैः ।
गजाश्वरथपादातिसहस्रैरपि संयुतः ।
अन्वीतराजकटकः प्रतस्थेपश्चिमामुखः ॥ घ ॥
शाल्वोपिकुरुशार्दूलविमानेनखचारिणा ।
अपावृत्यरणाद्राष्ट्रमेवाभ्यर्दिकोययौ ॥ ङ ॥
गच्छमानस्यशाल्वस्यसाम्बोभिद्रुत्यपृष्ठतः ।
शाल्वामात्यक्षेमधूर्तिबाणैर्निन्येयमक्षयम् ॥ च ॥
सेनापतिं विविन्द्याख्यंशाल्वस्याखिलवल्लभम् ।
निरुध्यपथिगच्छन्तंप्रद्युम्नः प्राहरच्छरैः ॥ छ ॥
प्रद्युम्नेनातिविद्धोसौगृहीत्वाखड्गचर्मणी ।
ससञ्जरौक्मिणेयेनतदभूद्रणमद्भुतम् ॥ ज ॥
मण्डलानिविचित्राणिचरतं तस्यसङ्गरे ।
कृपाणेनयदुश्रेष्ठःशिरःकायादपाहरत् ॥ झ ॥
विभ्रष्टमार्गोसासेनाहतप्रवरयूथपा ।
विदुद्रावयथाकामंप्राणत्राणपरायणा ॥ ञ ॥
देवोपिद्वारकामेत्यवेगेनरुडध्वजः ।
ददर्शनगरींभग्नप्रासादाट्टालगोपुराम् ॥ ट ॥
विशीर्णतोरणांरुग्णतुंगसालप्रतोलिकाम् ।
विध्वस्तोपवनोद्यानांप्रसन्दापूर्णदीर्घिकाम् ॥ ठ ॥
निःस्वाध्यायवषट्कारामालोक्यद्वारकांपुरीम् ।
अपृच्छत्कृतवर्माणंकिमेतदितिदुर्मनाः ॥ ड ॥
तेनोक्तंसर्वमाकर्ण्यशालराजविचेष्टितम् ।
प्रतिजज्ञेयदुपतिः शृण्वतांसर्वसात्वताम् ॥ ढ ॥
अनुद्धत्यतमद्यैवसौभं हत्वादुरात्मकम् ।
सौभंनिपात्यजलधौप्रवेक्ष्येद्वारकामिति ॥ ण ॥
सरथंशैव्यसुग्रीवमेघपुष्पवलाहकैः ।
युक्तंबहुप्रहरणमग्रावस्थितदारुकम् ॥ त ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आरुह्य भगवान्विष्णुर्गरुडध्वजमुत्तमम् ।
प्रययौ सौभपदवीं मनोमारुतरंहसा ॥ ध ॥

तथागत्वा सुदूरन्तमम्भोधेः कुक्षिमाश्रितम् ।
ददर्श सौभन्तन्मध्ये शाल्वं चसमलङ्कृतम् ॥ द ॥

॥ क—घ ॥

रणादपावृत्य रणम्विहायेत्यर्थः ॥ ङ—च ॥

अखिलात्समस्तप्रकृतिजनात् वल्लभं प्रियतमम् ॥ छ ॥

ससञ्ज सङ्गतः ॥ ज—ट ॥

सालः प्राकारः प्रतोली विशिखा रथ्येति हलायुधः प्रतोलिरेव प्रतोलिका प्रस्तरा पूर्णदीर्घिकां पाषाणपूरितपार्श्वां गन्तुमिति शेषः ॥ ठ—णं ॥

त—द ॥

॥ ७—१४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कुरुवृद्धाननुज्ञाप्य पुत्रसहितां पितृभगिनीञ्च पृष्ट्वा अपशकुनेषु जायमानेषु द्वारकाऽस्वास्थ्यज्ञापकेषु प्राप्तशङ्क इव घोराणि त्रिविधानि पश्यन् द्वारवतीं ययौ ॥ ७ ॥

कृष्णेगच्छतश्चिन्तामाह—आहचेति । प्रथमतः अहमिह इन्द्रप्रस्थे समागतः पश्चादार्यमिश्रेण बलभद्रेण अभिसङ्गतो मिलितः सहैव आगमनं ततो रक्षार्थमवतीर्णोऽहमपि द्वारकायां नास्तीति चैद्यपक्षीया राजन्या दैत्याः नूनं मे पुरीं हन्युः निमित्तदर्शनं चिन्ताभङ्गश्चेति निरूप्यते मतान्तरे दोषभावं मोहकार्यं वर्णयन्ति हि ॥ ८ ॥

(मूलम्) इति सञ्चिन्त्य भगवानाजगाम त्वरान्वितः ।
सङ्ग्रामभूमिमागत्य प्रद्युम्नादीन्निरीक्ष्य सः ॥०॥

ततो यज्जातं तदाह—वीक्ष्यतत्कदनमिति । अहोरात्रं युद्धक्लेशम्वीक्ष्य पुररक्षणमर्थाद्बलभद्रं निरूप्य यथाकथञ्चित् कथाया अनुवादाज्ञाप्रासमर्पकतादोषः नापि क्रियायां क्रियान्तरोल्लङ्घनदोषः सौभञ्च निरीक्ष्य सालवराजञ्च निरीक्ष्य स्वसारथिं दारुकं प्रतिप्राह—स्वतः समर्थस्य सूतस्य प्रेरणमयुक्तमित्याशङ्क्याह—केशव इति । यथा ब्रह्मशिवौ प्रेरयति तथैनमपीत्यर्थः ॥ ९ ॥

तस्मिन् काले सारथिः प्राकृत इति सम्बोधयति रथं प्रापयेति सम्भ्रमो भयं ते त्वया यतः सौभराट् मायावीति तस्य स्तुतिः पूर्वं प्रेरणायां दारुको विकलस्थित इति ॥ १० ॥

एवं भगवता उक्तः भगवन्तं मानयामास तथैव करिष्यामीति भयं त्यक्त्वा प्रवृत्त इत्यर्थः । रथं सम्यगास्थाय यतो दारूणां शिरोरूपः सुखरूपो वा अतस्तदिच्छानुसारेण दारूणां चलनमुक्तं ततो रथस्य शीघ्रगत्या रेणुभिराच्छादने रथमदृष्ट्वैव सर्वं एव स्वे परे ये अरुणानुजं गरुडमेव विशन्तं ददृशुः ॥ ११ ॥

ततः शाल्वेनैव कृष्णो दृष्ट इत्याह—शाल्वश्चेति हतप्रायबलस्य ईश्वरः सोपि निरन्तरयुद्धेन क्लिष्टः ततः क्रोधेन सूतेन रथः शीघ्रमानीत इति कृष्णसूताय भीमरवां शक्तिं प्राहिणोत् मृधे युद्धे सावधानदशायाम् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आहचेति स्वगतम् आर्य्यः श्रीबलभद्रः स एव मिश्रः पूज्यस्तेनाभिसङ्गत इति न श्रीशुकमतं किन्तु परमतमेवोक्तं तथैवोपरिष्टाद्व्याख्यास्यमानत्वात् ॥ ८ ॥

एवं चिन्तयन्नेव द्वारकामागत्य तत्र च शाल्वप्रापितं स्वानां कदनं वीक्ष्य पुराणामन्तःपुरस्थानां श्रीरुक्मिण्यादीनां रक्षणं निरूप्य ताः सर्वाः पट्टमहिषीः सेनानीद्वारा गुप्तमार्गेण द्वारकावासमध्यञ्च प्रवेशयेत्यर्थः शाल्वराजञ्च वीक्ष्य ॥ ९—१० ॥

ततश्च अरुणानुजं ध्वजे वर्त्तमानं श्रीगरुडम् ॥ ११ ॥
हतप्रायाः बलेश्वराः सेनान्यो यस्य सः ॥ १२-१३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आर्यमिश्राः बलभद्रसहिताः महारथाः सात्यक्यादयः तैः सङ्गतः ॥ ८ ॥

द्वारवतीमागत्य सौभं शाल्वराजञ्च वीक्ष्य स्वानां कदनं युद्धञ्च वीक्ष्य रामं पुररक्षणं प्रति निरूप्य दारुकं प्राह ॥ ९—१० ॥

अरुणानुजं ध्वजस्थं गरुडम् ॥ ११ ॥
हतप्रायस्य बलस्येश्वरः ॥ १२-१३ ॥

---

भाषा टीका ।

भय के सूचक दुर्निमित्तनको देख कर कौरवन में वृद्ध पुरुषोंको और मुनिजनोंको पुत्र सहित कुन्तीको पूछ कर श्रीकृष्ण भगवान् द्वारकाको पधारते भए ॥ ७ ॥

इस के पहले श्रीकृष्णजी अपने मनहि मन में यह कहते भए कि पूज्य बलभद्रजी सहित मैंतो इहां चलो आयो पाछें शिशुपाल के पक्ष के क्षत्रिय लोग हमारी पुरीका अवश्य नाश करैंगे ॥ ८ ॥

द्वारका में आय कर वहां शाल्व करकै अपने यादवन के कष्टको देख कर तथा सौभ और शाल्वको देख कर पुरीकी रक्षा के प्रति बलदेवजीको कह कर श्रीकृष्णजी दारुक नाम सारथि के प्रति बोलते भए ॥ ९ ॥

हे सूत ! मेरे रथको शीघ्रहि तू शाल्व के पास लेचल और तू कुछ सम्भ्रम नहिं करना यह शाल्व मायावी है ॥ १० ॥

इस प्रकार श्रीकृष्णने उसको कहा तब दारुक सारथि रथमें बैठ कर अश्वनको हांकता भया पश्चात् यादव और शाल्व के पक्ष के सबहि गरुडजीको ध्वजा में प्रवेश करते देखते भए ॥ ११ ॥

तामापतन्तीं नभसि महोल्कामिव रंहसा ।
भासयन्तीं दिशः शौरिः सायकैः शतधाऽच्छिनत् ॥ १३ ॥
तं च षोडशभिर्विद्ध्वा बाणैः सौभं च खे भ्रमत् ।
अविध्यच्छरसन्दोहैः खं सूर्य इव रश्मिभिः ॥ १४ ॥
शाल्वः शौरेस्तु दोस्सव्यं सशार्ङ्गं शार्ङ्गधन्वनः ।
विभेद न्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतम् ॥ १५ ॥
हाहाकारो महानासीद्भूतानां तत्र पश्यताम् ।
विनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ १६ ॥
यत्त्वया मूढ नः सख्युर्भ्रातुर्भार्या हृतेक्षताम् ।
प्रमत्तः स सभामध्ये त्वया व्यापादितः सखा ॥ १७ ॥
तं त्वाऽद्य निशितैर्बाणैरपराजितमानिनम् ।
नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥ १८ ॥

### भाषाटीका ।

मरे के सदृश असार सेनाका ईश्वर शाल्वराजा श्रीकृष्णको देख कर श्रीकृष्ण के सारथि के मारने के वास्ते भयंकर शब्द वारी शक्तिको युद्ध में छोडता भया ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तञ्च शाल्वं शरसन्दोहैः शरजालैः खं सूर्य इव रश्मिभिरिति सुनीलत्वविपुलत्वादिभिराकाशोपमा सौभस्य अचिन्त्यवेगबाहुल्यादिभिः शराणां रश्मिसादृश्यम् अयत्नेनैव रश्मिवच्छरजालप्रसारणात्सूर्यतुल्यः श्रीकृष्ण इति ॥ १४ ॥

दोर्बाहुम् ॥ १५-१६ ॥

सख्युः शिशुपालस्य ईक्षतामस्माकं प्रमत्तोऽनवहितः व्यापादितो निहतः ॥ १७ ॥

अपराजितोऽहमिति मानिनं मानवन्तम् अपुनरावृत्तिं मृत्युं तिष्ठेः स्थास्यसि ॥ १८—२२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नभस्यापतन्तीं नभस्येवाच्छिनदित्यर्थः ॥ १३ ॥

खे भ्रमदपि ॥ १४ ॥

दोषो नपुंसकत्वं च दृश्यते सव्यं दोरच्छिनत्तस्येति रघुकाव्यात् शार्ङ्गधन्वनोपि ॥ १५ ॥

जनानां तादृशानां दुष्टानां मर्द्दनमपि लीलयैव तादृशतामनुकुर्वन्तं तमाहेति धृष्टता निर्बुद्धिता च सूचिता ॥ १६ ॥

यदिति युग्मकम् । यत् येन त्वया अस्माकं सख्युस्तव तु भ्रातुः पैतृष्वसेयस्य सभामध्ये न तु युद्धमध्ये अतः प्रमत्तः अनवहितः अत एव व्यापादितः त्वयेति पुनरुक्त्या व्यापादनस्य तदेककर्तृत्वेन परमद्रष्टव्यत्वं तथा सखेति चान्तः शोकविशेषं सखाति मित्रार्थकृत्यस्यावश्यकत्वं च सूचयति यदीत्यमुतेन मद्भयात्किल पलायिष्यस इति भावः । गदिरेवीमते मूढ हे परमविद्वन् ! अस्माकं सख्युर्भ्रातुश्च शिशुपालस्य तथा नोऽस्माकञ्च ईक्षतामीक्षमाणानां तत्रास्माकमागत्येत्यर्थः । येन त्वया भार्या लक्ष्मीत्वात्सिद्धा आर्यैव हृता तथा प्रमत्तः पीतमद्यादिवज्ज्ञानादुर्वचनाद्युन्मत्तचेष्टः सोऽस्मत्सखा व्यापादितः ॥ १७ ॥

तं न विद्यते पुनरावृत्तिर्यस्मात्तथाभूतं तथा अपराजितः केनाप्यनभिभूतो मानः पूजा तद्वन्तञ्च त्वां त्वदीयैरेव निशितैर्बाणहेतुभिर्नयामि गच्छामि प्रविशामीत्यर्थः । "नय पय गतौ" किन्तु मदग्र्यमेव तत्र साधकतममित्याह यदीति ॥ १८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न्यपतदिति मनुष्यभावानुकारः ॥ १५—२७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तामिति । रंहसा वेगेन नभस्यापतन्तीम् उल्कामिव सर्वा दिशो भासयन्तीं तां शक्तिं शतधा चिच्छेद ॥ १३ ॥

तमिति । खे आकाशे भ्रमद्भ्राम्यमाणं सौभं तं सौभपतिम् आविध्य खमाकाशं रश्मिभिः सूर्य इव शरजालैः पुनः सौभमाविध्यत् सुनीलत्वविपुलत्वादिभिराकाशोपमा सौभस्याचिन्त्यवेगत्वबाहुल्यादिभिः शराणां रश्मिसादृश्यमयत्नेनैव रश्मिवच्छरजालप्रसारात् सूर्यतुल्यः श्रीकृष्ण इत्यवगन्तव्यम् ॥ १४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

साल्व इति । शार्ङ्गधन्वनः कृष्णस्य शार्ङ्गसहितं दोर्भुजं बिभेद विव्याध हस्ताच्छार्ङ्गं न्यपतत् तदद्भुतमभूदभूतपूर्वत्वादिति भावः ॥ १५ ॥

अत एवाह—हाहाकार इति । महान्तश्चेदिति अस्य शार्ङ्गपातजसन्तोषातिशयादित्यादिः उच्चैः विनद्य इदं वक्ष्यमाणमाह ॥ १६ ॥

तदेवाह-यदिति द्वाभ्याम् । यत् यस्मात् हे मूढ ! नोऽस्माकं सख्युः चैद्यस्य भार्यात्वेन सङ्कल्पिता रुक्मिणी त्वयाऽस्माकं ईक्षतां पश्यतां सतामपहृता तथा नः सखा सभामध्ये व्यापादितो हतः तत्र हेतुत्वेन सखायं विशिनष्टि, प्रमत्तः तदाऽनवहितः इत्यर्थः ॥ १७ ॥

तामिति । तुशब्दोऽत्र हेत्वर्थः । तस्मात्तं सख्युर्भार्यापहर्तारं हस्ताच्चापराजितमात्मानं मन्यमानञ्च त्वामपुनरावृत्तं मृत्युं नयाम्यतो युद्धे ममाग्रतस्तिष्ठ ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सव्यं हस्तम् ॥ १५—१६ ॥

सख्युर्भार्या शिशुपालस्य सङ्कृता जाया रुक्मिणी ॥ १७ ॥

अपुनरावृत्तिं मरणं यमगृहं वा ॥ १८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततस्तन्निराकरणमाह—तामापतन्तीमिति । दर्शनेनापि भयजनकत्वायाह—महोल्कामिवेति । रंहसा आपतन्तीमिति प्रतीकारान्तरं निराकृतं भासयन्तीं दिश इति तस्या माहात्म्यं फलावश्यकत्वाय ततो भगवान् सायकैर्बहुभिरेव शतधा अच्छिनत् ॥ १३ ॥

ततः प्रहारकर्तुरपि प्रहारं कृतवानित्याह-तञ्चेति । षोडशभिर्बाणैरष्टाङ्गेषु द्वाभ्यां द्वाभ्यां वेधः सौभञ्च षोडशभिः खे भ्रममेव नतु स्थितम् आदौ तं विध्वा रक्षायाभावे सौभञ्च विध्यत् तत्र तु शरसन्दोहा एव बहव एव उपर्यधश्च वेधार्थं दृष्टान्तः खं सूर्य इवेति अनेनाकाशस्य पीडाभावो निरूपितः ॥ १४ ॥

महादेवप्रशंसेयं ततो महादेव भक्त्यासौभातिक्रमे कृते शाल्वोऽप्यतिक्रमं कृतवानित्याह—शाल्वः शौरेरिति । तुशब्दः सिद्धान्तं वारयति सव्यं दोः वामबाहुं सायुधञ्च यतोयं शार्ङ्गधन्वेति प्रसिद्ध एव प्रसिद्धहेतुसहितं महापराक्रमसहितं निराकृतवानिति महादेवप्रशंसा ॥ १५ ॥

हस्तान्न्यपतदिति अपि तत्र पश्यताम् भूतानां अभूतपूर्वत्वाद्धाहाकारः एवं कायिकनिराकरणमुक्त्वा वाचिकमाह—विनद्येति । जितञ्जितमिति विनन्दनमुक्त्वा ततः सौभराट् सौभे विराजमानः अनादरमविद्याया अपि नाशकम् ॥ १६ ॥

भ्रान्तो सखिदमाह—यत्त्वयेति द्वाभ्याम् । तस्य वाक्यं निरूपयति अमूढेति छेदः नः सख्युः शिशुपालस्य तव भ्रातुः भ्रातृरूपसख्युर्वा ईक्षितामस्माकं सतामेवाकिञ्चित्कराणामग्रे हृता अनेन स्वाभाविकशौर्यासव महच्छौर्यमिति स्तुतिरुक्ता न केवलं तच्छौर्यं आत्मसात्कृता किन्तु सोपीत्याह प्रमत्तः सत्सभामध्य इति सोपि समर्थः तथापि गदायां सन्निवृत्तायां शाल्वस्त्वन्तर्धीयतप्रमत्तत्वात् सभायां त्वया व्यापादितः युद्धे अतः स सखेति हेत्वर्थं पुनःकथनम् ॥ १७ ॥

ततः स्वकर्तव्यमाह—तन्त्वेति—निशितैरिति स्वपौरुषख्यापनम् ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

खं सूर्य इवेति सौभस्य श्यामत्वरितत्वाभ्यामाकाशेनोपमा शराणामसङ्ख्यत्वतापकत्वाभ्यां रश्मिभिः कृष्णस्य सर्वतेजःपराभावकतया सूर्येण ॥ १४ ॥

साल्व इत्यादि श्लोकत्रयं न शुकसम्मतं दोःसव्यमिति दोषो नपुंसकत्वमपि दृश्यते सव्यं दोरच्छिनत्तस्येति रघुकाव्यात् तत्शार्ङ्गपतनम् अद्भुतं तद्भुजबलस्यापरिमेयत्वात् ॥ १५—१७ ॥

हे मूढ ! अपुनरावृत्तिं मृत्युं नयामि प्रापयामि भारतीपक्षे न भवति मूढो यस्मात्तथाभूत ! नः सख्युः भ्रातुस्तव पैतृष्वसेयस्य शिशुपालस्य ईक्षमाणानामस्माकञ्चेत्यनादरे षष्ठी भार्य्या लक्ष्मीत्वात् स्वस्त्री हृता गृहीता निशितैर्बाणैः अपराजितश्चासौ मानी आदरपात्रञ्च तम् अपुनरावृत्तिं मोक्षं नयामि-नाययामीत्यर्थः । यद्वा-न भवति पुनरावृत्तिः संसारो यस्मात्तं मोक्षदायिनं त्वां नयामि प्राप्नोमीत्यर्थः ॥ १८—२० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शराणां सन्दोहैः समूहैः ॥ १४ ॥

दोर्बाहुम ॥ १५ ॥ १६ ॥

सख्युः शिशुपालस्य व्यापादितः निहतः ॥ १७ ॥

तिष्ठेः स्थास्यसि ॥ १८-२२ ॥

---

भाषा टीका ।

बडे लुका के समान दिशानकों प्रकाशित करती वेग से आकाश में आती भई उस शक्तिको श्रीकृष्णजी बाणों से आकाश मैंहि सौ प्रकार छेदन कर देते भए ॥ १३ ॥

और पश्चात् षोडश १६ बाणों से शाल्वका वेधन कर के आकाश में भ्रमते भए सौभ विमानको बाणों के समूहों से बेधते भए जैसें सूर्य्य निज किरणों से आकाशका बेधन करै ॥ १४ ॥

पश्चात् शाल्वभी शार्ङ्ग धनुष धारी श्रीकृष्ण के धनुष सहित वाम भुजाको बेधित करता भया तबतो श्रीकृष्ण के हस्त से शार्ङ्ग धनुष गिर पडा उसका गिर पना आश्चर्य्य कारी होगया ॥ १५ ॥

श्रीभगवानुवाच ।

वृथा त्वं कत्थसे मन्द न पश्यस्यन्तिकेऽन्तकम् ।
पौरुषं दर्शयन्ति स्म शूरा न बहुभाषिणः ॥ १९ ॥
इत्युक्त्वा भगवाञ्छाल्वं गदया भीमवेगया ।
तताड जत्रौ संरब्धः स चकम्पे वमन्नसृक् ॥ २० ॥
गदायां सन्निवृत्तायां शाल्वस्त्वन्तरधीयत ।
ततो मुहूर्त्त आगत्य पुरुषः शिरसाऽच्युतम् ।
देवक्या प्रहितोऽस्मीति नत्वा प्राह वचो रुदन् ॥ २१ ॥
कृष्णकृष्ण महाबाहो पिता ते पितृवत्सल ।
बद्ध्वाऽपनीतः शाल्वेन शौनिकेन यथा पशुः ॥ २२ ॥
निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिं गतः ।
विमनस्को घृणी स्नेहाद्बभाषे प्राकृतो यथा ॥ २३ ॥
कथं राममसम्भ्रान्तं जित्वाऽजेयं सुरासुरैः ।
शाल्वेनाल्पीयसा नीतः पिता मे बलवान् विधिः ॥ २४ ॥

भाषा टीका ।

वहां देखने वारे प्राणियोंका महान् हाहाकार शब्द होता भया तबतो शाल्वराजा ऊंचे स्वरसे गर्जना करके श्रीकृष्ण के प्रति यह बोलता भया ॥ १६ ॥

हे मूढ ! जिस कारण हम सबके देखते २ देखते हमारे मित्र शिशुपालकी भार्या को तेने हरी, तथा हमारा सखा असावधान रहा उसका शिशुपालको तेने सभाके मध्यमें मार दिया ॥ १७ ॥

इसी कारण अपनेकों अपरा जितमानने वारे तोंकों इस काळमें तीक्ष्ण बाणोंसे मृत्युको प्राप्त करताहूं, यदि युद्धमें तू मेरेआगे स्थिर रहेगा तो ॥ १८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

घृणी दयावान् ॥ २३—२५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कत्थसे आत्मानं श्लाघसे तच्च युक्तमित्याह—मन्द हे निर्बुद्धे ! मन्दत्वमेवाह, नेति. आसन्नमृत्युत्वादीदृशं कत्थनं युक्तमेवेतिभावः । शूरोऽपि न खलु भवसीत्याह—पौरुषमिति । स्मेति प्रसिद्धमेवैतदित्यर्थः ॥ १९ ॥

स साल्वः ॥ २० ॥

गदायामित्यर्द्धकम् सम्यक् निवृत्तायां निवृत्तः पुनः श्रीभगवत्करपङ्कजं गतायां मुहूर्त्ते जाते सतीत्यर्थः मुहूर्त्तादिति क्वचित् पुरुषः श्रीवसुदेवस्य प्रसिद्धभृत्यविशेषाकारः वचस्तत् सन्देशं गीर्देवीमते अप्रहित इतिच्छेदः वचो यत्किञ्चिद्वचनमात्रं नतु सत्यमित्यर्थः ॥ २१ ॥

हे कृष्ण ! एतत्संज्ञयातिप्रसिद्ध ! वीप्सा त्रासानुकारात् हे महाबाहो परमवीरेत्यर्थः । इति त्वत्पितुः शत्रुणा बद्ध्वानयनं परमानुचितमितिभावः किञ्च हे पितृवत्सलेति शोकं जनयति अपनीतः अपमान्य अपकारार्थं वा नीत इत्यर्थः । नच त्वत्पिता आत्मानं मोचयितुं शक्तइत्यादिकं दृष्टान्तेन बोधयन् शोकमधिकं जनयति शौनिकेनेति । पशुघातिना व्याधेनेत्यर्थः । गीर्देवीमते आपतेति छेदः पितृसदृशः कश्चिन्मायानिर्मित इत्यर्थः ॥२२॥

कृष्णः स्वयं भगवानपि प्रकृतिं स्वभावं विमनस्कः शोकाकुलस्सन् घृणी पितरि कृपावान् अतः स्नेहात् प्राकृतवत् स्वयं श्वासिन्नेव बभाषे ॥ २३ ॥

असम्भ्रान्तम् अप्रमत्तम् अल्पीयसा तदपेक्षयाऽतिक्षुद्रबलेनापि अहो दुर्घटमपि विधातुरिच्छया घटतेति शोकादाह—विधिर्बलवानिति ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमुक्तः प्राह—भगवान् वृथेति । हे मन्द ! विकत्थसे प्रगल्भं भाषसे अन्तिके समनन्तरे प्राप्तं मृत्युं न पश्यसि नालोकयसीत्यर्थः । किञ्च शूराः केवलं पौरुषमेव दर्शयन्ति नतु बहु यथा तथा भाषन्त इति तथा ॥ १९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । भीमो भयङ्करो वेगो यस्यास्तया गदया जत्रौ स्कन्धमूले तताड ताडयामास सच साल्वः असृग्रुधिरं वमन् उद्गिरन् च कम्पे कम्पितवान् ॥ २० ॥

गदायामिति । सन्निवृत्तायां श्रीकृष्णेनापनीतायां सत्यामित्यर्थः । अन्तरधीयत अन्तर्हितवान् तत अन्तर्धानानन्तरं कश्चित् साल्वप्रेषितः पुरुषः आगत्याच्युतं शिरसा नत्वा प्रणम्य रुदन् वचो वाक्यं प्राह, किमित्यत आह—देवक्या प्रहितः प्रेषितोऽस्मीति ॥ २१ ॥

किञ्च, हे पितृवत्सल ! ते तव पिता वसुदेवः साल्वेन बध्वा आनीतः यथा सौनिकेन पशुमारकेण पशुरपनीयते तद्वत् ॥ २२ ॥

निशम्येति । मानुषीं प्रकृतिं स्वभावम् अनुगतः प्राप्तः घृणी दयावानत एव विमनस्को दुःखितमनाः स्नेहात्पितृविषयकाद्बभाषे यथा प्राकृतः पुरुषस्तद्वत् ॥ २३ ॥

भाषणमेवाह—कथमिति । सुरासुरैरपि जेतुमशक्यं तं प्रसिद्धं रामं कथं जीत्वा क्षुद्रेण साल्वेन मम पिता आनीतः विधिर्दैवं बलवानहो ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यस्य तवातिकौतुकमिति व्याख्यातं वीर्यं नास्ति स त्वं मृषा कत्थसे पौरुषम् अस्तिचेद्दर्शय शूराणाञ्च भाषणं फल्गुमिति वीर्यप्रकटनं वाञ्छित्यर्थः । यद्वा शूराणां पौरुषं दर्शय भाषणं फल्गु तुच्छं विकत्थनमित्यर्थः ॥ १९—२६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

निशम्य विप्रियमित्यादि । अमानुषीं प्रकृतिं मतः आकृतिर्वेव तस्य मानुषीं मनुष्यसदृशी न प्रकृतिरित्यर्थः । विमनस्कः विक्षिप्तमनाः स्नेहादपि स्नेहेनापि अघृणी स्थिरः यतः अप्राकृतः एव सन् यथा यथावत् बभाषे ॥ २३ ॥

तत्किमित्याह—कथमित्यादि । एवम्भूतं रामं जित्वा कथम् अल्पीयसा क्षुद्रेण शाल्वेन बलवान् मे पिता आनीतः कीदृशः पिता विधिः सर्वतो भावेन समर्थः तदिदं मृषैवेति सार्वज्ञप्रकटनम् ॥ २४—२५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवांस्तु वाक्येन शब्दातिक्रमं वारयति । वृथा त्वं कत्थस इति । अर्थस्य बाधितत्वात्तत एव मन्दत्वं प्रत्युत विपरीतं तवास्तीत्याह—न पश्यतीति । आस्तिके मदर्थे तवास्ति कोस्तीति इदमयुक्तमिति जयापजययोः अदयत्वमिति शूराणां प्रकाशं वाक्यकथनमयुक्तमिति उपदिशति पौरुषं दर्शयन्तिस्मेति पौरुषं पुरुषशरीरबलं शूराः क्षत्रियाः ब्राह्मणानान्तु वाकूबलमेव भवति इति तद्व्युदासः ॥ १९ ॥



एवमुक्त्वा स्ववाक्यसत्यत्वाय भगवान् स्वपौरुषं दर्शयामास—इत्युक्त्वेति । यतो भगवान् समर्थः भीमवेगयेत्यलौकिकं सामर्थ्यं निराकृतं तत्रोत्कण्ठमालाक्षीनि संरब्धः क्रोधेन क्रियाविशेषमात्रं वा ततः स शाल्वः असृग्वमन् चकम्पे ॥२०॥

ततस्तस्य लोहितं दृष्ट्वा कृतकार्या गदा निवृत्ता तस्यां निवृत्तायां प्रहारान्तरेण मरणं भविष्यतीति निश्चित्य असुरत्वाद्भगवद्रूपां मायां प्रार्थयितुम् अन्तरधीयत तुशब्देन महादेवपक्षो निवारितः ततो भगवद्रूपमायाकृत्यमाह —ततो मुहूर्त इति । मुहूर्त्तानन्तरं कश्चित् पुरुषः समागतः इदं मानसनिराकरणं तेन मनसा प्रार्थितेनेश्वरेण क्रियत इति भगवतोऽपि मनस्येव काचित् प्रतिभासेव स पुरुषो मायिकः तथापि भगवदीय इति भगवत्समीपागमनेऽपि न तस्य नाशः सोपि व्यामोहार्थमच्युतमव्यामुग्धं देवक्या अहं प्रहित इति आत्मानं निवेद्य पश्चाद्भगवन्तं नत्वा रुदन् वचः प्राह—देवकयन्तरङ्गत्वख्यापनार्थं रोदनं तस्य वा वाक्यम् ॥ २१ ॥

कृष्णकृष्णेति । दुःखे वीप्सा महाबाहो इति क्रियाशक्तिसामर्थ्यं वाच्यमाह—पिता त इति । पितृवत्सलेति अभिमानार्थे सम्बोधनं बध्वापनीत इति महत्यपमानना स्वयमेव त्यक्ष्यतीति शङ्काभावाय दृष्टान्तमाह—सौनिकेनेति । सुनायां प्रसिद्धः मारक एव अतो मारणार्थं नीतवानित्यर्थः ॥ २२ ॥

निराकरणकार्ये भगवति भातमित्याह—निशम्य विप्रियमिति । मानुषीं मनुष्यस्वभावमङ्गीकृतवान् ततः तत्स्वभावात् विमनस्कः घृणी पितरि कृपावांश्च ततः स्नेहात् वक्ष्यमाणं बभाषे "मनःपूर्ववागुत्तररूपम्" इति श्रुतेः । तस्य वपुरेव शिर इति मनसः पुरुषशब्दप्रकृतित्वात् शब्दाभावे मानसपीडापूर्णा नोका भवतीति शब्दोपि निरूप्यते ॥ २३ ॥

कथं राममिति । रामो रक्षार्थं नियुक्तः सचासम्भ्रान्तः अतिसावधानः समयविशेषात् अतिक्रमस्तु तस्याशक्य इत्याह—सुरासुरैरजेयमिति । अयं सर्वोत्तमो भविष्यतीत्याशङ्क्याह—साल्वेनाल्पीयसा नीत इति । मे पितेति भाग्यं वा तस्य कथं न रक्षकं जातमित्यर्थः सर्वातिक्रमस्य दृष्टत्वात् नित्येच्छो विधिरेव बलवान् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

परमतमाह—गदायां सन्निवृत्तायामित्यारभ्य यावत्स्वाप्न यथेति ॥ २१-२२ ॥

घृणी दयावान् ॥ २३-२५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

घृणा दयाऽस्यास्तीति स तथा ॥ २३-२५ ॥

---

भाषा टीका ।

श्रीभगवानुवाच ।

अरे मन्द ! तू वृथाहि बकवाद करता है समीप में अपने

इति ब्रुवाणे गोविन्दे सौभराट् प्रत्युपस्थितः।
वसुदेवमिवानीय कृष्णं चेदमुवाच सः ॥ २५ ॥
एष ते जनिता तातो यदर्थमिह जीवसि।
वधिष्ये वीक्षतस्तेऽमुमीशश्चेत्पाहि बालिश ॥ २६ ॥
एवं निर्भर्त्स्य मायावी खड्गेनानकदुन्दुभेः।
उत्कृत्य शिर आदाय खस्थं सौभं समाविशत् ॥ २७ ॥
ततो मुहूर्त्तं प्रकृतावुपप्लुतः स्वबोध आस्ते स्वजनानुषङ्गतः।
महानुभावस्तदबुध्यदासुरीं मायां स शाल्वप्रसृतां मयोदिताम् ॥ २८ ॥
न तत्र दूतं न पितुः कलेवरं प्रबुद्ध आजौ समपश्यदच्युतः।
स्वाप्नं यथा चाम्बरचारिणं रिपुं सौभस्थमालोक्य निहन्तुमुद्यतः ॥ २९ ॥
एवं वदन्ति राजर्षे ऋषयः केच नान्विताः।
यत्स्ववाचो विरुध्येत नूनं ते न स्मरन्त्युत ॥ ३० ॥

भाषा टीका।

मृत्यु को तू नहि देखता और जो शूरवीर होते हैं वे बहुत बोलते नहि हैं किन्तु अपने पराक्रम को दिखावते हैं ॥ १९॥

इस प्रकार कहकर श्रीकृष्ण भगवान् क्रोधित होकर भयंकर वेगवारी गदा से कण्ठ के मूल में शाल्व को मारते भए गदा के प्रहार से रुधिर की वमन करत शाल्व राजा कंपायमान होजाता भया ॥ २० ॥

गदा के निवृत्त होने पर शाल्व अन्तर्धान होगया पश्चात् एक मुहूर्त्त काल व्यतीति होने पर शाल्वने माया कर के भेजा भया वसुदेव के भृत्यका रूप धारी एक पुरुष आय कर मस्तक से श्रीकृष्णको प्रणाम कर के रुदन करत यह बोला कि मैं देवकीने पठायो हूँ ॥ २१ ॥

हे कृष्ण ! हे कृष्ण ! हे महाबाहो ! हे पितृवत्सल ! जस कसाई पशुको बांध कर लेजाता है तैसेहि शाल्व राजा आप के पिता वसुदेवको बांध कर लेगया ॥ २२ ॥

इस प्रकार के अप्रिय वचनको सुन कर प्राकृत मनुष्य वत् स्नेह से मनुष्य स्वभावको प्राप्त होकर तथा दयावान् और उदासीन मन होकर श्रीकृष्ण बोलते भए ॥ २३ ॥

सुर और असुरों से अजेय पुरकी रक्षा में सावधान हुसे श्रीबलरामजीको जीत कर अति तुच्छ शाल्व राजा हमारे पिताजीको कैसे लेगया इस वास्ते दैवहि बलवान् है ॥ २४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

जनिता जनयिता ईशश्चेच्छक्तश्चेत् ॥ २६-२७ ॥

स्वबोधः स्वतस्सिद्धज्ञानवानपि स्वजनस्नेहतः प्रकृतौ मनुष्यस्वभावे उपप्लुतो निमग्न आस्ते अतिष्ठत् ततस्तत्सर्वमासुरीं मायामबुध्यत् माययमिति ज्ञातवान् ॥ २८ ॥

स्वाप्नं स्वप्नप्रपञ्चं यथा ॥ २९ ॥

एवं परमतमुपन्यस्तं निराकरोति—एवमिति। केच केचन नान्विताः अनन्विताः पूर्वापरानुसन्धानरहिताः तदाह यत्स्ववाच इति तन्नानुस्मरन्तीत्यर्थः। अयमभिप्रायः न तावद्राजसूयार्थं रामेण सह गतः श्रीकृष्णः सङ्कर्षणमनुज्ञाप्येति पूर्वमुक्तत्वात् ॥ ३० ॥

———

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी।

प्रत्युपस्थितः पुनः परावृत्य समीपमागतः किं कृत्वा वसुदेवमिवानीय कञ्चित्तदाकारमुपस्थाप्य ॥ २५ ॥

जनिता जनकः नतवन्नदात्रादिलक्षणः पिता इति सम्बन्धविशेषेण शोकभरमुत्पादयति—यदर्थमिति। सत्पुत्रस्य तदर्थं प्राणत्यागौचित्यादितिभावः। वीणतः साक्षाद्वीक्ष्यमानस्यापि तव हे बालिश ! मत्प्रभावानभिज्ञत्वादितिभावः। गीर्दर्वीतु वाचयति यदर्थमिह मयि जीवसि बलं प्रकटयसि स एष ते तव अजनिता जनको न भवति अत एव अतातस्तातो न भवतीत्यर्थः। तस्मात्पश्यतस्ते इन्द्रजालमिव कौतुकेन पश्यति त्वयि अमुं वधिष्ये तत्र निजोद्देश्यमाह—ईश इति। चेदित्यवधारणे "धत्से पदं त्वमविता यदि विघ्नमूर्ध्नि" इतिवत् हे बालिश ! बाला मूर्खाः सन्त्येषां बालिनो मूर्खसभापतयः तान् मादृशान् श्यति तनूकरोति क्षिणोतीति हे तथाभूत ! यस्मादवश्यमीशः परमस्वतन्त्रस्त्वं तस्मात् पाहि मादृशं संसारादुस्तरेति ॥ २६ ॥

आनकदुन्दुभेस्तदाकारस्य उत्पाट्य छित्वा उत्कृत्येति वा पाठः ॥ २७॥

ततः शिरस उत्पाटनादादानाच्च हेतोः शाल्वात्प्रसृतां तेन

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रसारितामित्यर्थः । ननु कुतस्तस्येदृशी शक्तिः तत्राह मयेनोदितामुपदिष्टाम् ॥ २८ ॥

प्रबुद्धस्सन् न सम्यक् साक्षादपश्यत् प्रबुद्धत्वे हेतुः अच्युतः अनश्वरज्ञानादित्वादिति भावः ॥ २९ ॥

ऋषयोऽपि स्वकीयाया एव वाचो हेतोर्यद्विरुध्येत विरुद्धं स्यात् तन्नानुस्मरन्ति नानुसन्दधति नूनं वितर्के निश्चये वा ॥ ३० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रकृतावुपप्लुतः प्रकृतिवश्याज्ञसंसारिवदित्यर्थः । अबुध्यत प्रबुद्धवानभूदित्यर्थः । नित्यसार्वज्ञत्वात् ॥ २८—२९ ॥

यत्र स्ववाचा "तान्यहं वेद सर्वाणि" इति स्वसार्वज्ञविषयवाचा ते इति बहुवचनं तत्राभिप्रायः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इति इत्थं ब्रुवाणे सति वसुदेवमिवेति इवशब्देन वस्तुतोऽवसुदेवमिति सूच्यते ॥ २५ ॥

उक्तिमेवाह—एष इति । ते तवैष जनिता जनकः तातः पिता पालकव्यावृत्तये जनितेत्युक्तं यदर्थं किमर्थमित्यर्थः । ते तव वीक्षतः पश्यतः सतोऽमुं वसुदेवं वधिष्ये हे बालिश मूढ ! ईशः समर्थश्चेदमुं पाहि ॥ २६ ॥

एवमिति । आनकदुन्दुभेर्वसुदेवस्य शिर उत्कृत्य छित्वा आदाय खस्थमाकाशं स्थितं सौभमाविशत् ॥ २७ ॥

तत इति । प्रकृतौ मानुषस्वभावे उपप्लुतो मग्नः स्वबोधः स्वासाधारणं सार्वज्ञ्यं यस्य सः तत्र हेतुः स्वजनानुसङ्गच्छतेऽनुवर्त्तन्त इति तथा तेष्वासक्तो वा ततो महानुभावः हेतुगर्भमिदं तत्त्वात्स भगवान् मयोदितां साल्वं प्रति मयेनैवं कुर्वित्युपदिष्टामित्यर्थः । साल्वेन प्रेषितामासुरीं मायामबुध्यत ज्ञातवान् इत्यर्थः ॥ २८ ॥

ततः किं कृतवांस्तदाह—नेति । यदेवं प्रबुद्धोऽबुध्यत तत्र तदैव आजौ युद्धाङ्गणे दूतं नापश्यत् नापि पितुः कलेवरं यथा स्वप्नादु (त्थितः) बुद्धः स्वाप्नमर्थं न पश्यति तद्वत् किन्तु अम्बरचारिणं सौभे स्थितं तं रिपुं साल्वमवलोक्य निहन्तुमुद्युक्तो बभूव ॥ २९ ॥

इतीत्थमुपन्यस्तं परमतं निराकरोति—एवमिति । हे राजर्षे ! केचिदृषयः नान्विताः अनन्विताः पूर्वापरानुसन्धानरहिता इत्यर्थः । इत्थं वदन्ति तदेवाह—यत्स्ववाचो विरुध्येरन् विरोधं प्राप्नुयुरिति यत्तन्नानुस्मरन्ति नानुसन्दधते नूनं ध्रुवम् अयमभिप्रायः नतावद्राजसूयार्थं रामेण सहागतः श्रीकृष्णः सङ्कर्षणमनुज्ञाप्येति पूर्वमुक्तत्वात् नचेन्द्रप्रस्थं गते कृष्णे साल्वागमनं साल्वसङ्ग्रामव्यासक्तेन मया युष्मद्वृत्तं न ज्ञातमिति काम्यकवनस्थान् पाण्डवान् सान्त्वयता श्रीकृष्णेन उक्तमिति व्यासोक्तेरिति ॥ ३० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शाल्वस्य शक्तिप्रकटनाय तन्मायाप्रकारमाह-तत इति ॥२७॥

श्रीकृष्णः शाल्वसृष्टां मायाम् अवलोक्य किमकरोदत्राह तत इति । ततो वसुदेवशिरोहरणानन्तरं मुहूर्तकालं तत्र युद्धे अनुतिष्ठत् अन्वातिष्ठत् अन्ववर्तत कीदृशः प्रकृतौ चिदानन्दघनस्वभावे उपस्थितोऽपि शाल्वमायां जानन्नपि प्रकृतावुप प्रकृतिसमीपे स्थितः अजानन्निव पुनः किं चकारेति तत्राह—ततो मुहूर्त्तान्महानुभावः अपरिमितप्रभावः स हरिः स्वजनस्य स्वभक्तजनस्यानुकूलात्सङ्गतः वचनप्रसङ्गात् तद्वसुदेवशिरोहरणमबुध्यत, कथम् ? तदत्राह-आसुरीमिति । शाल्वेन प्रकृतां प्रयुक्तां मूलबलमाह—मय इति । मयेनासुररक्षणोदितामुपदिष्टामित्यर्थः तदुक्तं "जानन् शाल्वकृतां मायामजानन्निव केशवः । अन्ववर्तत किञ्चत्तु" इति बुद्ध्वा किं कृतमत्राह, प्रकृताविति. "कृती च्छेदने" इति धातोः बुद्ध्वा मायाः प्रकृतौ निर्मूलने सम्यक् स्थितोऽभूदिति शेषः । "ततस्तामाहराद्विभुः" इति वचनात् अज्ञानप्रकटनं कस्मादत्राह, प्रकृताविति । प्रकृतिनिर्मितशरीरस्थत्वाद्सुरजनमोहनार्थत्वाच्च—

"एवमेव तु सर्वत्र परमात्मा सनातनः ।
विद्धश्च रुधिरस्रावी कथञ्चिदजयत्परम् ॥

इत्यादि दर्शयेद्विष्णुर्मोहयन्मायया जगत्" इति चिदानन्दघनस्वभाव इत्येतत्कुत इति चेन्न "चिदानन्दघनस्यास्य कुतो वेधादि सम्भवेत्" इत्यस्मात्स्वजनानुसङ्गत इति इदमपि सङ्गतेः इतिसिद्धं "यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु मायेत् सा ते यानि युद्धान्याहुर्नाद्यशत्रुं ननु पुरा विवित्से„ इत्यादिश्रुतिसिद्धोऽयमित्यर्थः । तथाहि, हे इन्द्र ! तन्वा वावृधानः स्वरूपेण भृशं वर्धमानस्त्वं बलानि वीर्याणि विक्रमलक्षणानि अचरः अकृतेति यत् स्वजनेषु प्रब्रुवाणो व्याकुर्वाणो वर्तस इति शेषः । तस्मात् स्वभावरहस्यं स्वजना जानन्तीत्यर्थः । शाल्वादिशत्रुणा क्रियमाणानि यानि युद्धानि आहुः पुराणादौ एतानि त्वामुद्दिश्य सा मयोदिता माया इत् इन्द्रजाललक्षणेव त्वं पुरा प्रथमतो मुहूर्तं शत्रुसुखत्रोटनान्मायां न विवित्से न ज्ञातवानसि अद्याधुना विवित्से ननु पश्चात्सा सिद्धाभूदित्यर्थः ॥ २८ ॥

एतदेव स्पष्टयति-नेति । अच्युतः ज्ञानच्युतिरहितः तत्पितुः कलेवरञ्च नापश्यत्प्रबुद्धः मायामिति शेषः । आत्मा परमात्मा निदर्शयति स्वप्न इति यथा स्वप्ने करितुरगादीन् पश्यति ततः प्रबुद्धः तान्पदार्थांश्च पश्यति बुद्ध्वा किं कृतमत्राह अम्बरचारिणमिति ॥ २९ ॥

तद्द्रष्टृणामृष्यादीनामपि ज्ञानलोपो नास्ति किम्पुनः हरेरिति भावेनाह—एवमिति । कथं वदन्तीत्यत्राह—यत्स्ववाच इति । स्वस्य स्वतन्त्रस्य हरेर्वाचो वेदलक्षणा यन्मोहादिकं हरिविषयं प्रति विरुध्यन्ते विरोधवन्त्यो भवन्ति हरेर्मोहादिकं न सहन्त इत्यर्थः । "अजस्यावक्रचेतसः" इति श्रुतेः । नूनं तार्किका उपक्रमादिवेदतात्पर्यलिङ्गकोविदास्ते वैदिकास्तन्मोहादिकं स्मरान्ति नु किं नैव स्मरन्तीत्यर्थः । येषां स्ववाचो विरुध्यन्ते हरेर्मोहादिवादिन्यः परस्परविरोधिन्यः स्युः ते शास्त्रप्रणेतारः तादृशीर्वाचः स्मरान्ति पुराणादौ नवेति वा ॥ ३० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं वदन्तीति विरुद्धं यत्तत्त्रयमेवाह—क शोकेति । अत्राज्ञसम्भवा अन्ये लभ्यन्ते पूर्वे मायापारवश्यकृताः चेत् संसारिणाम् उत्तरे परमार्थवस्तुमाधुरीपारवश्यकृताः तेतु संसारोत्तीर्णानां यथा प्रह्लादस्य संसारिणां तद्वहिर्मुखत्वमयदुःखदर्शनेन श्रीनृसिंहदेवे स्वशोकनिवेदनं यथा ब्रह्ममोहनलीलाकथनारम्भे श्रीशुकदेवस्य मोहः यथा श्रीभरतस्य श्रीभगवन्तमविदुषि वहुशाणेऽनुग्रहमयः स्नेहोदयः यथा वा सनकादीनां श्रीवैकुण्ठदेवे तत्पार्षदद्वशापजनितस्वभयनिवेदनमिति एत श्रीभागवतेऽपि वर्णिताः यथा "तान् वीक्ष्य कृष्णः सकलाभयप्रदो ह्यनन्यनाथान् स्वकरादपच्युतान् । दीनांश्च मृत्योर्जठराग्निघासान् घृणार्दितो दिष्टकृतेन विस्मितः" ॥ इति तस्मादस्युर्ययदि मायया मोहयितुमिष्यते तदातु न सर्वथासौ शोकमोहादिमानभवतीत्येव मन्तव्यं यत्तु ततो वत्सानदृष्ट्वेत्यादिकं वर्णितं तत् पुनः परमभक्तेन ब्रह्मणा सह लीलाकौतुकार्थमेव स्वातन्त्र्येणाङ्गीकृतमिति ज्ञेयम् ॥ ३०-३७ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

एष ते जनितेत्यादि सरस्वती वक्ति । एष वसुदेवः ते तव अजनिता अतः अजनितायामपि अजत्वेपि जातः तातत्वेन स्वीकृतः वस्तुतस्तव जनिरेव नास्ति कुतस्तातसम्भवाना यदर्थं यस्य वसुदेवपूर्वपूर्वजन्मकृतस्य निमित्तं जीवसि जीव इवाचरसि जातवत्प्रतीयसे आचारार्थे क्विपि कृते तल्लोपात् सिद्धम् ईक्षतो वीक्षमाणस्य तव पुरतोऽमुं वधिष्ये पाहि रक्ष चेत् यतस्त्वम् ईशः हे बालिश ! केशिनायत वालाः केशाः सन्त्यस्येति वाली केशी तं श्यतीति कः ॥ २६-२७ ॥

ततो मुहूर्त्तमित्यादि । ततस्तदनन्तरम् अस्वजनानां परेषां शत्रूणाम् अनुषङ्गतः अमुहूर्त्तं क्षणमात्रमेव उपप्लुत उपद्रुतस्सन् महान् भावः श्रीकृष्णस्तत् ताम् आसुरीं मायां अबुध्यत यतः प्रकृतौ भावे सर्वज्ञत्वे स्थितः ॥ २८-२९ ॥

एवं वदन्तीत्यादि हे राजर्षे ! केच न अन्विता मुनय एवं वदन्ति नतु तत्सत्यं सर्वज्ञस्य श्रीभगवतस्तथापि सरस्वत्येव तत्समाधीयते ॥ ३०—३७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

न केवलं नयनमात्रं तदा मानसः क्लेशः सन्दिग्धोपि भवेत् किन्त्वनर्थान्तरमपीत्याह—इतिब्रुवाण इति । प्रत्युपस्थितः आभिमुख्येन समायातः ततो वसुदेवमिव मायिकं कञ्चन पुरुषं समानीय कृष्णमिदं वक्ष्यमाणमुवाच यतः स उपासितमायारूपः स भगवान् ॥ २५ ॥

तस्य वाक्यम् "एष ते जनिता ते" इति । भगवत्त्वादिन्द्रियप्रवृत्तिः अजनिता अतात इति तु वस्तुस्थितिः कृतेपि भूभारहरणे स्थितिः पित्र्यर्थेति मन्यते यद्यप्यन्येषां क्षितिबिन्दुकार्यार्थी तथापि पितृभक्तस्य एतदेव कार्यमिति प्रकृते क्लेशाधिक्याय आरोप्य न्यायेन पितृभक्तत्वं वदन् स्वतः पीडां कर्त्तुमशक्तः तदभावे स्वत एव पीडितो भविष्यतीति तथोक्तवान् अधिकक्लेशार्थमाह—वधिष्य इति । क्रिया तु कर्त्तव्यैवेति प्रतिज्ञाहान्यर्थम् ईशश्चेत्पाहीत्युक्तवान् स्वबुद्ध्या सम्बोधनं बालिशेति नापि शं यस्मादिति स्वयमेव द्वेषिणामप्युपकारं करोषीति मारणेनास्मान् कृतार्थान् कुर्विति प्रार्थना मतान्तरभावेति पदार्थो नात्राभिप्रेत इति न पदानाम् ॥ २६ ॥

अर्थान्तरं वर्ण्यते, निर्भर्त्सनम् अभिमानप्रच्यावणं तथा करणे बलं मायावीति "मायेत्यसुराः" इति श्रुतेः । तं यथायथोपासते तद्वैनान् भूत्वाऽवतीति च भगवतैव भगवान् एवं क्रीडतीति न काप्यनुपपत्तिः अतो भगवदावेशात् लीलाप्रदर्शक इव आनकदुन्दुभेः शिरः खड्गेनोत्कृत्य पुनर्योजनाभावाय खम् आकाशस्थितं सौभं मूलाश्रयं समाविशत् ॥ २७ ॥

एतन्मुहूर्त्तमात्रं त्रितीयेपि मुहूर्त्ते भगवानिममर्थं चिन्तयन् तूष्णीं स्थितः अनेन बलभद्ररक्षाभावशङ्कापि निवारिता तदनन्तरं मुहूर्त्तमात्रं प्रकृतावेवोपप्लुतस्सन् पश्चान्मानुषीं प्रकृतिं परित्यज्य अन्यप्रबोधाभावेपि स्वबोध एवास्ते स्वज्ञानशक्तिं प्रकटीकृतवान् अत्रापि क्रियाव्यवहितेन सम्बन्धः स्वजनानुषङ्गतो वा तस्य स्वजनानुषङ्गो नास्तीति मोहाभावात् जिज्ञासया स्वबोधे स्थितिर्जातेत्यर्थः । ननु तथाप्युपदेशाभावे कथं ज्ञाननिष्ठा ? तदाह—महानुभाव इति । तदा तामासुरीं मायामबुध्यत इदं ममैव रूपान्तरमिति आत्मजिज्ञासायामेव आत्मावबोध इति अनेन तस्मिन्नपि कल्पे भगवतः शुद्धब्रह्मत्वमित्युक्तम् अज्ञत्वादिलीला सर्वावतारेष्विति न काप्यनुपपत्तिः परमुपक्रान्ते भागवते कृष्णो नैवम्विध इति अत्रापि साधारण्येन योजयतां दूषणमग्रे वक्तव्यं सा माया कुत उत्पन्ना किंनिष्ठेति तत् द्वयं निर्दिशति—शाल्वप्रसृतां मयोदितामिति साल्वे व्याप्ता मयेन च निरूपिता ॥ २८ ॥

ततो बोधेन तद्रूपे उपसंहृते तत्कार्याणां भयो जात इत्याह—न तत्र दूतमिति । अनेनापि भगवत्त्वमेव साधितम् अन्यथा मायिकोपसंहारे हेत्वभावः दूतः पितुः शरीरञ्च पूर्वं दृश्यमानमपि प्रबुद्धस्सन् पश्चादागतो युद्धस्थाने न सम पश्यत् यतो ऽयमच्युतः रूपान्तरस्थितः तथैवेति ज्ञापयितुं गूढार्थोऽयमिति दृष्टान्तमाह—स्वप्नं यथेति । स्वप्नेपि स्वयमेव स्थितः परं रूपान्तरेणेति । रूपान्तरस्वीकारे तस्यादर्शनं युक्तं चकारेण मायामनोरथादिकमपि संगृह्यते ततः अम्बरचारिणं रिपुं सौभरथमालोक्य मारणे पापेन महादेवभगवतोः उपेक्षणाद्रक्षकाभावात् निहन्तुमुद्यतः इति पूर्वपक्षः ॥ २९ ॥

सिद्धान्तमाह—एवमिति । अस्य पूर्वपक्षत्वं युक्तिबोधेन वक्तव्यमेव प्रमाणबोधेनापि निरूप्यते—एवं मुनयो वदन्तीति । मननेन सञ्जातं यदार्षज्ञानं तेनोत्प्रेक्ष्यैव ज्ञात्वा वदन्ति मूलविरोधे आर्षज्ञानमप्रमाणमिति शास्त्रमर्यादा उपजीव्यविरोधात् यथा प्रमाणबोधितधर्मेणैवम् आर्षज्ञानं वृत्तमिति प्रमाणविरोधेन निरूपितानि साङ्ख्यादिमतान्यप्रमाणानि एवं भगवदनुभावकृपाव्यतिरेकेण प्रमेयबलं विना आर्षज्ञानं न भवतीति तेन ज्ञानेन भगवति दोषदर्शनं स्वजन्मनि मातृव्यभिचारदर्शनमिव सर्वथा बाधितविषयत्वादुपेक्ष्यं तथापि धृष्टाः निर्लज्जाः ये वदन्ति मूलभूतेपि भगवति दोषाननुपपन्नसन्तिमुनयो वदन्ति

क शोकमोहौ स्नेहो वा भयं [1]वा येऽज्ञसम्भवाः ।
क चाखण्डितविज्ञान[2]ज्ञानैश्वर्यैस्त्वखण्डितः ॥ ३१ ॥
यत्पादसेवोर्जितया ऽऽत्मविद्यया हिन्वन्त्यनाद्यात्मविपर्ययग्रहम् ।
लभन्त आत्मीयमनन्तमैश्वरं कुतानु मोहः परमस्य सद्गतेः ॥ ३२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधनी ।

इति ऋषय इत्यपि तथा राजर्ष इति सम्बोधनं स्वपक्ष-परपक्षाभिनिवेशयोः विश्वासोपहासौ बोधयति एतेषां मध्ये केचनैवान्विताः, युक्तवादिनः सर्वनिराकरणे अर्द्धनिराकरणं प्ररोचनार्थं नान्विता इति पदच्छेदे सर्वनिराकरणं वा उपहासे युक्तिमाह—यत्स्ववाचो विरुद्ध्येरन्निति ते किं कल्पान्तरव्यवस्थां योगबलेन ज्ञात्वा वदन्ति आहोस्वित् इदानीन्तनभगवद्व्यवस्था आद्ये नास्माकं कापि क्षतिः द्वितीये तु कृष्णस्तु भगवान् स्वयमिति शास्त्रपर्यालोचनया तदनुगुणा एव धर्माः वक्तव्या इति विरुद्धकथनात् ते नूनं न स्मरन्ति अपिच तादृशार्षज्ञानेन त अपि पूर्वमपि स्मृतिमप्रमाणमेव नतु सर्वेष्ववतारेषु अवतारधर्माः प्रवर्त्तन्ते अन्यथा वसुदेवसुतत्वादयोपि बाधितार्था इति न वक्तव्याः स्युः ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

जनिता जनयिता ॥ २६—२७ ॥

प्रकृतौ मानुषस्वभावे उपप्लुतः व्याप्तः सुष्ठु अबोधः सन्नास्ते स्म तदनन्तरन्तु स महानुभावस्तत्सर्वमासुरीं मायां साल्वेन प्रसृतां प्रयुक्तां मयात् उदिताम् अबुध्यत ॥ २८ ॥

अत एव न तत्रेत्यादि स्वाप्नं स्वप्नप्रपञ्चं यथा ॥ २९ ॥

एवं परमतमुपन्यस्य तन्निराकरोति—एवमिति । केच केचन नान्विताः पूर्वापरानुसन्धानरहिताः, तदेवाह यत्स्ववाचो विरुध्येत विरुद्ध्येरन्निति तन्नानुस्मरन्तीत्यर्थः । तथाहि न तावद्राजसूयार्थं रामेण सह गतः कृष्णः सङ्कर्षणमनुज्ञाप्येति पूर्वमुक्तत्वात् ततश्चार्य्यमिश्राभिसङ्गत इति तैर्वर्णितं कृष्णोक्तं कथं सङ्गच्छतां यदि वा कष्टेन सङ्गच्छतां नाम तदा पुनरपि "कथं राममसम्मतं जित्वाऽजेयं सुरासुरैः" इति कृष्णोक्तमुपपद्यतामिति ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जनिता जनयिता ॥ २६—२७ ॥

स्वः स्वासाधारणः "यः सर्वज्ञः सर्ववित्" इत्यादि-श्रुतिप्रसिद्धो बोधो यस्य स तथाभूतोपि स्वजनेषु योनुषङ्गः अनुरागस्तस्मात् प्रकृतौ प्राकृतजनस्वभावे उपप्लुतो निमग्नः आस्ते अतिष्ठत् ततः मयोदितामासुरीं मायां सालवप्रहिताम् अबुध्यत् ज्ञातवान् ॥ २८ ॥

एतदेवं प्रबुद्धः न दूतं न पितुः कलेवरं समपश्यत् यथा प्रबुद्धः स्वाप्नमर्थं न पश्यति तद्वत् ॥ २९ ॥

परमतं दूषयति—एवमिति । केच केचन ऋषयः एवं वदन्ति ते नान्विताः पूर्वापरानुसन्धानरहिताः तदाह यत्स्ववाचो विरुध्येत विरुद्ध्येरन् विरोधं प्राप्नुयुः तन्न स्मरन्ति नूनं निश्चितम् अयमाशयः न तावद्रामेण सह राजसूयार्थं गतो हरिः सङ्कर्षणमनुज्ञाप्येत्युक्तत्वात् ॥ ३० ॥

---

भाषा टीका ।

श्रीकृष्ण जी इसप्रकार कहहि रहे हैं इतनेही में शाल्व राजा प्रकट होकर मायासे रचे भये वसुदेव के समान पुरुष को लाय कर श्रीकृष्ण के प्रति यह बोले ॥ २५ ॥

तेरे उत्पन्न करने बाला यह पिता है जिसके अर्थ इस संसार में तू जीवता है तेरे देखते२ मैं इस का वध करूंगा हे अज्ञ ! यदि समर्थ होतो तू इस की रक्षा कर लेना ॥ २६ ॥

मायावी शाल्व राजा इसप्रकार श्रीकृष्ण का तिरस्कार करके तरवार से मायावसुदेव के शिरको काटकर उस शिरको लेकर आकाश में स्थित विमान पर जाबैठा ॥ २७ ॥

उस के अनन्तर पिता के विषय में आसक्ति होनेते एक मुहूर्त्त पर्य्यन्त श्रीकृष्ण भगवान् मनुष्य स्वभाव में डूब जाते भए पश्चात स्वतः सर्वज्ञ महानुभाव श्रीकृष्ण भगवान् पिता के वधको मयदैत्य से शिक्षित और शाल्व से प्रसारित आसुरी माया जानते भए ॥ २८ ॥

सर्व कालमें प्रकृष्ट ज्ञानवान् श्रीकृष्ण जी ने पिता के शरीर को नहिं देखा जैसे जागने पर स्वप्न को नहि देखते पश्चात विमान पर बैठे भये आकाश चारी वैरि शाल्व को देखकर श्रीकृष्ण जी उस के वध करने को उद्युक्त होते भए ॥ २९ ॥

हे राजर्षे ! पूर्वापर विवेक नहि करने वारे कोई ऋषि लोग ऐसे कहते हैं जो अपने वचन विरोध को प्राप्त होता है उस का वे ऋषि लोग विवेक नहि करते ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

[1]असम्भावितञ्चेत्याह—क शोकमोहाविति । भयं वा दुर्निमित्तदर्शनकृतं नूनं हन्युः पुरीं ममेति यदुक्तं यच्च हस्ताच्छार्ङ्ग

(१) अज्ञानसम्भवम् ।　(२) ज्ञानैश्वर्यस्य शाल्मनः ॥ इति वीर० पाठः ॥

तं शस्त्रपूगैः प्रहरन्तमोजसा साल्वं शरैः शौरिरमोघविक्रमः ।
विद्ध्वाऽच्छिनद्वर्म धनुः शिरोमणिं सौभं च शत्रोर्गदया रुरोज ह ॥ ३३ ॥
तत्कृष्णहस्तेरितया विचूर्णितं पपात तोये गदया सहस्रधा ।
विसृज्य तद्भूतलमास्थितो गदामुद्यम्य शाल्वोऽच्युतमभ्यगाद्द्रुतम् ॥ ३४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न्यपतदित्युक्तं तद्धयं वा केति अक्षेषु सम्भवो येषां ते अखण्डितानि विज्ञानज्ञानैश्वर्याणि यस्य सः तत्र विज्ञानं स्वरूपविषयं ज्ञानं बाह्यविषयम् ॥ ३१ ॥

किञ्च यस्य पादसेवया ऊर्जिता पुष्कला या आत्मविद्या तया अनादिश्चासावात्मविपर्ययग्रहश्च अहं कृशः सुखी दुःखी इत्यादिलक्षणस्तं हिन्वन्ति नाशयन्ति सन्तः ऐश्वर्यं पदञ्च तस्य सतां गतेः कुतो नु मोह इति अतो नैतद्वचनं सत्यमित्यर्थः ॥ ३२ ॥

किं तर्हि सत्यं तदाह—तं शस्त्रपूगैरिति । वर्म कवचम् रुरोज बभञ्ज ॥ ३३—३४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मोहः अज्ञानं सुरैरीडित इति शुद्धसात्त्विकदेवैः तत्त्वेन तामसशोकधभावोऽखण्डविज्ञानादिसद्भावश्च दृढीकृतः ॥ ३१ ॥

आत्मविद्यया स्वतत्त्वविज्ञानेन आत्मनः स्वस्वरूपस्य विपर्ययेन वैपरीत्येन ग्रहं ग्रहणं ज्ञानमित्यर्थः । आत्मीयं पदं स्वरूपानुभवलक्षणं मोक्षमित्यर्थः । ऐश्वरञ्च वैकुण्ठलोकं कथम्भूतम्? अनन्तं लोकत्वेपि श्रीविग्रहवदपरिच्छिन्नं नु अहो मोहः अज्ञानं परमस्य परमेश्वरस्य इति दुर्निमित्ततादर्शनं तेन चिन्ता च न सम्भवेत् तथा सतां मुक्तानां मोक्षानपेक्षकभक्तानां वा गतेर्गम्यस्येति सच्चिदानन्दविग्रहत्वेन च दौर्मनादिकं न सम्भवेदेवेति भावः । अथवात्र प्रकरणे सर्वं नासमञ्जसं किन्तु किञ्चिदेव कुरुवृद्धानुज्ञापनापूर्वकप्रस्थानादीनामपेक्षितत्वात् श्रीबलदेवस्य सभापर्वादावुक्तं तत्र गमनं च न विरुद्धं पूर्वमागतस्यापि पश्चाद्यज्ञार्थमाह्वानेन तथा श्रीकृष्णेन सहैवागत्य पुररक्षार्थावस्थानेन च सम्भवात् पूर्वं द्वारकायां स्थिते तु श्रीबलदेवे श्रीप्रद्युम्नस्य युद्धादौ प्राधान्यायुक्तत्वात् प्राकृता अपि तदानीं जानीयुः किमुत श्रीवैशम्पायनादयः अतस्तेषां तत्र मोहो न सम्भवेत् दुर्निमित्तदर्शनादिकञ्च लीलैव ततस्तदपि न विरुद्धं यत्तु श्रीभगवदन्तर्द्धेत्वात्तैर्दुरूहं विरुद्धञ्च तत्स्वयमेवाह—क्व शोकेति । अखण्डितविज्ञानादित्वेन शोकादिवशत्वेन चोक्तत्वात् स्ववाग्विरुद्धता तत्राज्ञसम्भवा इति विशेषणाद्विज्ञसम्भवा अन्ये लक्ष्यन्ते पूर्वे मायापारवश्यकृताः तेच संसारिणाम् उत्तरे परमार्थवस्तुमाधुरीपारवश्यकृताः तेतु संसारोत्तीर्णानां यथा श्रीप्रह्लादस्य संसारिणां तद्बहिर्मुखत्वमयदुःखदर्शनेन श्रीनृसिंहदेवे स्वशोकनिवेदनं यथा वा ब्रह्ममोहनलीलाकथनारम्भे श्रीशुकदेवस्य मोहः यथा वा श्रीभरतस्य श्रीभगवन्तमविदुषि रहूगणेऽनुग्रहमयः स्नेहोदयः यथा वा सनकादीनां श्रीवैकुण्ठदेवे तत्पार्षदशापजनितस्वभयनिवेदनमिति एते श्रीभगवतोपि दामोदरलीलाप्रसङ्गे भक्तानुग्रहस्वभावतास्थापनया स्थापिता एव यथैव श्रीशुकदेवेनापि स्वयमन्यत्र वर्णितं—

"तान् वीक्ष्य कृष्णः सकलाभयप्रदो
ह्यनन्यनाथान् स्वकरादपच्युतान् ।
दीनांश्च मृत्योर्जठराग्निघासान्
घृणार्दितो दिष्टकृतेन विस्मितः ॥" इति

यथा तत्रैव च सर्वसात्वतगणरक्षार्थं शाल्वेन युद्ध्यतीति तस्मादसुरैर्यदि मायया मोहयितुमिष्यते तदा न सर्वथा शोकमोहादिभाग्भवतीत्येव मन्तव्यं यत्तु—

"ततो वत्सानदृष्ट्वैत्य पुलिनेपि च वत्सपान् ।
उभावपि वने कृष्णो विचिकाय समन्ततः" ॥ इति

ब्रह्मणो माययैव तत्तद्वर्णितं तत्पुनः परमभक्तेन ब्रह्मणा सह लीलाकौतुकार्थमेव स्वानन्येणाङ्गीकृतमिति ज्ञेयम् एवमेवोत्तरपद्येपि अनाद्यात्मविपर्ययग्रहं हिन्वन्तीत्येवोक्तमिति दिक् एवं ततो मुहूर्त्तमित्यादिद्वये गीर्देवीमतमेतत् मुहूर्त्तं व्याप्य तत्तस्मात् मिथ्याकारणाद्धेतोर्यः स्वजनस्य श्रीवसुदेवस्य अनुषङ्गो ऽनुस्मरणं तृतीयायास्तसिल् तेनोपप्लुतो व्याप्तोपि प्रकृतौ स्वस्वरूपे स्वबोधे निजसार्वज्ञ एवास्ते स्वव्यवच्छेदेनासीत् यतो महानुभाव इत्यादि मुहूर्त्तानन्तरन्तु बहिरपि नापश्यदित्याह—नेति । तत्र दृष्टान्तः प्रबुद्धः स्वप्नसमयेपि स्वप्नीयमिति निर्णीतबोधो जनो यथा क्षणात्स्वाप्नं तत्सम्बन्धि वस्तु न पश्यति तथेति ॥ ३२ ॥

एवं परमतामिश्रं पूर्वं प्रकरणं संशोध्य केवलस्वमतमुत्तरं प्रकरणमाह—वर्म्मादीनां तत्तत्क्रमेणाच्छादनं तद्दर्पस्याधिकनिरसनार्थं यतः शत्रोः ह हर्षे ॥ ३३ ॥

तत्सौभं तोये समुद्रे ॥ ३४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अज्ञसम्भवाः संसारिषु सम्भवन्तः ज्ञानविज्ञानशब्दौ प्रकारप्रकारिज्ञानपरौ अखण्डितविज्ञानज्ञानैश्वर्यः ईश्वरः विज्ञानज्ञानैश्वर्याणाम् इति वा अर्थः ॥ ३१ ॥

आत्मीयमनन्तमैश्वरं गुणाष्टकलक्षणं लभन्ते ॥ ३२—३४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

असम्भावितश्चैतदित्याह—क शोकमोहाविति । विमनस्क इत्यनेनोक्तः शोकः मानुषीं प्रकृतिं गतइत्यनेनोक्तो मोहश्च घृणी स्नेहादित्यनेनोक्तः स्नेहो भयं वा दुर्निमित्तदर्शनजं नूनं हन्युः पुरीं ममेत्यनेनोक्तं यच्च हस्ताच्छार्ङ्गं न्यपतदिति तच्चाज्ञानसम्भवं न विद्यते ज्ञानं येषां तेषु सम्भवं सम्भवेत् भयं वा केत्यसम्भावना द्योत्यते तद्धेतुत्वेन भगवन्तं विशिनष्टि—अखण्डितेति । ज्ञानविज्ञानशब्दौ प्रकारप्रकारिविषयज्ञानपरौ, अखण्डिते ज्ञानविज्ञाने सर्वपदार्थतद्याथात्म्यविषयके ऐश्वर्य्यञ्च यस्य तस्येश्वरस्य सर्वान्तर्यामिणिः शोकादिः केति सम्बन्धः । हेत्येवंविधस्य भगवतः शोकादिकं वदतो विस्मयन्ते इति ॥ ३१ ॥

शोकाद्यभावं कैमुत्यनयाभिप्रायेणाह—यत्पादेति । यस्य भगवतः पादयोः सेवया परिचर्यादिरूपसेवया श्रवणकीर्त्तनादिरूपया वा ऊर्जिता पुष्कला परिनिष्पन्नेति यावत् तयाऽऽत्मविद्यया आत्मनस्तस्य परमात्मनः विद्यया उपासनया अनाद्यात्मविपर्ययग्रहं हिन्वन्ति अपनयन्ति अनादिश्चासावात्मनो विपर्ययः देहाद्विलक्षणस्यात्मनो देहतादात्म्यभ्रमः अस्वतन्त्रस्यात्मनः स्वातन्त्र्यभ्रमश्चेत्येवम्विधो विपर्ययः स एव ग्रहः पिशाचस्तं किञ्चानन्तमसङ्कुचितमात्मीयमैश्वरम् अपहतपाप्मत्वादिगुणाष्टकलक्षणं लभन्ते निरस्तनिश्शेषाज्ञानतत्कार्याः गुणाष्टकप्रादुर्भावरूपमुक्तिं लभन्त इत्यर्थः । सतां गतेः परमपुरुषस्य मोहं कुतोनु तत्पादसेवकानामेव न मोहः किम्पुनस्तस्य मोहाभाव इति वक्तव्यमित्यर्थः ॥ ३२ ॥

इत्थं परमते निरस्ते किन्तर्हि तात्त्विकमित्याह—तमिति । शौरेरित्यस्येन्द्रप्रस्थादागत इत्यादिः यद्वा भगवतः शोकमोहादिप्रतिपादकमिव स्थितमनूदितं परमतमुद्धरति-एवं वदन्तीति त्रिभिः। अन्विता युक्ता इति यावत् केचनैवम्वदन्ति इत्यर्थः । ननु निरस्तनिखिलदोषस्य भगवतोऽज्ञानशोकादिदोषान्वदन्तः कथमभियुक्ता इत्यत आह—यदिति । यत् यस्मात्स्ववाच इति षष्ठ्यन्तं स्ववाचः "वेदाहं समतीतानि वर्त्तमानानि चार्जुन । तान्यहं वेद सर्वाणि" इतिसार्वज्ञ्यविषयभगवद्वचसः ये विरुध्येरन् अज्ञानादयो दोषास्तान् ते ऋषयः नानुस्मरन्त्येव किन्तु मनुष्यभावानुकारमात्रतात्पर्यकत्वेन तथोचुरिति भावः । त इति बहुवचनं सर्वाभिप्रायकम् एवञ्च मानुषीं प्रकृतिङ्गत इत्यस्य प्रकृतिं स्वभावं गतोऽनुगतः अनुकुर्वन्नित्यर्थः । अन्यथा प्राकृतो यथेति दृष्टान्तासङ्गतिः हस्ताच्छार्ङ्गं न्यपतदित्युक्तेरपि मनुष्यभावानुकारे तात्पर्यम् अन्यथा निरस्तनिखिलदोषस्य क्वावद्यसम्भावनापीत्यभिप्रायेणाह-क शोकेति द्वाभ्याम् । अनयोर्यथोक्त एवार्थः । अस्मिन्पक्षे आर्यमिश्राभिसङ्गत इत्यस्यायमर्थः आर्यमिश्राः वृद्धाः भीष्मादयस्तैरभिसङ्गतः अभितस्सङ्गतस्सुखमासमिति आर्यमिश्रैश्च सङ्गत इति पाठान्तरमपि क्वचिद्दृश्यते आर्यैर्मुनिभिर्मित्रैभवद्भिश्च सङ्गत इत्यर्थः । ननु बलभद्रसहितत्वमनेनोच्यते अस्मिन्पक्षे काम्यकवनस्थपाण्डवसान्त्वनमुपपन्नमेवान्यथा परमतं दूषयन् बादरायणः स्ववचसोः पूर्वपरयोर्विरोधं परमते नापादयितुमर्हति ततो मुहूर्त्तमित्यादेस्त्वयमर्थः उपप्लुतः स्वबोध इत्यसमस्तं पदद्वयं स्वबोधः स्वः स्वाभाविकः स्वासाधारणश्च बोधः सार्वज्ञ्यरूपो यस्य तथाभूतोपि प्रकृतावुपप्लुतो मग्नः प्रकृतिवश्याज्ञसंसारीव आस आस्त इत्यर्थः । तत्र हेतुः स्वजनान् यदूननुसङ्गतः अनुवर्त्तमानः स्वयमपि कश्चिद्यादववदनुकुर्वन्नित्यर्थः । ततोऽबुद्ध्यत प्रबुद्धवानभूत् नित्यसर्वज्ञोपि प्राकृतवत्क्रमेण बुध्यत इति किञ्चाद्य व्याख्याने इन्द्रप्रस्थाद्भगवदागमनस्यानुक्तत्वात्तं शस्त्रपूगैरित्यादेः पूर्वग्रन्थसन्दर्भवैघट्यं शौरिरित्यस्येन्द्रप्रस्थादागत इत्यादि पूरणत्वे स्वारस्यमित्यवगन्तव्यमित्यलं विस्तरेण । अमोघोऽप्रतिहतो विक्रमो यस्य स शौरिरोजसा बलेन शस्त्रजा(लैः) तैः प्रहरन्तं सालवं शरैर्विद्ध्वा ताडयित्वा वर्म कवचं धनुश्च शिरोमणिञ्चाच्छिनत् सौभन्तु गदया रुरोज बभञ्ज हेत्याश्चर्ये॥३३॥

तदिति । कृष्णहस्तेनेरितया प्रयुक्तया गदया सहस्रधा विचूर्णितं तत्सौभं तोये समुद्रजले पपात ततः सालवः तत् सौभं त्यक्त्वा भूतलमास्थितः गदाम् उद्यम्य द्रुतं यथा तथा तं कृष्णमभ्यद्रवत् ॥ ३४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

(मूलम्) इति तैरुदितां वाणीमाकर्ण्य कमलेक्षणः ।
ससौभं हन्तुमारेभे शाल्वं कुरुकुलोद्वह ॥ क ॥
ततो निशातमादाय चक्रं कृष्णः सुदर्शनम् ।
आग्नेयास्त्रेणाभिमन्त्र्य प्राहिणोत्सौभनाशनम् ॥ ख ॥
तन्नारायणहस्ताग्रधान्मुक्तमाग्नेयमन्त्रितम् ।
जज्वालाब्रह्मसदनं ज्वालामालातिभीषणम् ॥ ग ॥
ततो वैमानिकाः सर्वे त विहाय विहायसम् ।
सुदर्शनोष्मणा तप्ता दुद्रुवुः सर्वतो दिशम् ॥ घ ॥
तदर्कशतसङ्काशं सौभं भित्वा द्विधा पुरम् ।
भूयो नारायणकरं प्राप भूप सुदर्शनम् ॥ ङ ॥
ततः समुद्रे न्यपतत्पुरं विच्छिन्नबन्धनम् ।
गदापाणिर्दुराधर्षः शाल्वोपि प्रत्यदृश्यत ॥
तां प्रेषयामास गदां कृष्णमुद्दिश्य दुर्मतिः । च ॥
ततो रथं दैत्यवलोपनीतं संस्थाय शाल्वो बहुशस्त्रसञ्चयम् ।
अवाकिरन् कृष्णशिरस्यनन्तैर्महायुधैश्च व्यनदद्धरिर्यथा ॥छ॥
तां गदां प्रेषितां तेन छित्त्वा बाणैस्त्रिधा हरिः ।
पाञ्चजन्यमुपाध्माय सिंहनादं व्यनीनदत् ॥ ज ॥)

प्रत्युत विपरीतमेव वदन्तीत्याह—केति । ये शोकादयोऽज्ञानतः सम्भवो येषां ते तथा ॥ ३१ ॥

तदेव दृढयति—यत्पादेति । आत्मविद्यया परमात्मज्ञानेन अनादिकालेन आत्मविपर्ययग्रहं मनसि स्थितमन्यथाज्ञानं हिन्वन्ति नाशयन्ति न तावदेव किन्तु हरितत्त्वञ्च जानन्तीत्याह- लभत इति । आत्मीयमात्मनः परमात्मनो विद्यमानमनन्तमैश्वरमीश्वरत्वं लभन्ते जानन्ति यद्वा स्वयोग्यमैश्वरमीश्वरानुगृहीतमनन्तं मोक्षं लभन्ते प्राप्नुवन्ति ॥ ३२ ॥

॥ क—ख ॥

आब्रह्मसदनं ब्रह्मसदनं ब्रह्मलोकपर्यन्तम् ॥ ग—घ ॥

सौभं नाम पुरम् ॥ ङ ॥

अनन्तैरनेकसङ्ख्यैः हरिः सिंहः ॥ छ—ज ॥

शिरोमणि कीरीटं रुरोज बिभेद ह प्रसिद्धम्—

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"शतं सहस्रमयुतं नियुतं प्रयुतार्बुदे ।
न्यर्बुदं शङ्खवृन्दञ्च निखर्वं खर्वमर्बुदम् ॥
इतियादवः ॥ ३३—३५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्मादवतीर्णस्य दोषवर्णनं न बाधितमिति शङ्कायामाह—क शोकमोहौ स्नेहो वेति । अयमवतारः नावतारान्तरवत् केनचिदंशेन अज्ञानशक्तिसहितो वा किन्तु साक्षात्पुरुषोत्तमस्यैव पूर्णशक्तिमतः ततश्च तत्र पूर्णरूपे प्रथमतो हीनभाव एव बोधयितुमनुचितः भक्तोत्कर्षबोधनाभावात् तत्रापि पित्रर्थं शोकमोहश्च मायिके पितृत्वबुद्धिः तस्मिंश्च स्नेह इति वेत्यनादरे तदनुगुणं वचनं च पिता मे बलवान् विधिरित्यादि एते कथं न भवन्तीत्याह—अज्ञसम्भवा इति । अज्ञानगृहीत एव चैतन्ये एतेऽन्तःकरणस्य धर्माः सम्भवन्ति प्रकृतेप्येवमेवास्त्विति चेत्तत्राह—क्वाखण्डितविज्ञानज्ञानेति । भगवति सर्वदा त्रयं संसिद्धं सर्वलीलास्वपि अखण्डितं विज्ञानमात्मानुभवः ज्ञानं सर्ववस्तूनाम् ऐश्वर्यं पूतनास्तनपयःपानप्रभृति सर्वत्र त्रयाणां निरूपणात् यत्राज्ञानं बाल्ये सर्वजनीनं तत्र यदि नास्ति तदा कथमिदानीं जीवानामपि विवेकदशायां तत् सम्भवेत् नच लोकास्तथा बोध्यन्त इति यतः लोकानामपि भगवानतिशय (इय) ऐश्वर्य इतिबुद्धिः यतः सुरैरनुत्तमणमीडितः उपलक्षणमेतत् पारिजातहरणगोवर्द्धनोद्धरणकालीयदमनादीनि पामराणामपि माहात्म्यज्ञापकानि भगवच्चरित्राणि सन्ति अतः सर्वथाऽस्मिन्नवतारे केनाप्यंशेनाज्ञानादिकथनं बाधितविषयमेव ॥ ३१ ॥

किञ्च, यद्यस्मिन्नवतारे कोप्यंशः अज्ञानकृतः प्रदर्शनार्थो वा भवेत् तदा अयमवतार एव न भवेत् मोक्षदानमेवास्यावतारस्य प्रयोजनम् अन्यत्तु गौणमेव नृणां निःश्रेयसार्थाय इति वाक्यात् अन्यथा कामादिभिर्भजने मोक्षो न स्यात् भक्तियोगविधानार्थमित्यपि पक्षे माहात्म्यविघटकत्वादिदं चरित्रमसामञ्जस्यमित्याभिप्रेत्याह—यत्पादसेवोर्जितयाऽऽत्मविद्ययेति । यस्य पादसेवया ऊर्जिता आत्मविद्या भवति ब्रह्मविच्चरणसेवया उत्पन्ना भगवच्चरणसेवया पुष्टा भवति बीजभावदेहभावयोः लोके महान् विशेषः तथा गुरोर्भगवतः सकाशाच्च जायमानज्ञानविशेषः एवं यत्र चरणसेवकानामन्येषामेव भवति यत्र च गुरोरपि मोहो निवार्यते तत्र कथम्भगवन्मोहसम्भवः किञ्च न केवलं तेषां ज्ञानमेवोत्पद्यते किन्तु तेन ज्ञानेन अनाद्यात्मविपर्ययं हिन्वन्ति नाशयन्ति अनादिर्योयमात्माग्रहः ततो विपर्ययः देहादिबुद्धिः तत्र योयमाग्रहः समूलकमज्ञानकार्यं नश्यतीत्यर्थः । न केवलं तावन्मात्रं किन्त्वज्ञाननिवृत्त्यनन्तरम् आत्मानं भगवन्तमपि लभन्ते ननु स्वात्मा लब्ध एव को विशेष इति चेत्तत्राह—अनन्तमीश्वरमिति । अपरिच्छेदऐश्वर्ये आत्मना आत्मन्येव तत्रैश्वर्यं तत्रैवेति सर्ववादिसम्मतं परिच्छेदेऽस्तु केषाञ्चिन्मते आविद्यकः उभयथापि विशिष्टात्मा सायुज्य एव प्राप्तो भवति ततश्चैकस्मिन्न इव जन्मनि चरणसेवामात्रेण निषिद्धप्रकारेणापि अविद्यानिवर्त्तकं ज्ञानम् अनुपदमेव सायुज्यञ्च ज्ञानमार्गेपि जन्मकोटिभिः साध्यं कथं लभन्ते अतस्तेषामस्मिन्नप्यवतारे अज्ञानादिवर्णनं शास्त्रान्तरकरणज्ञानवदुपेक्ष्यमेव ननु प्रदर्शनार्थं वा तथा लीलाप्रदर्शनं भविष्यतीति चेत्तत्राह—परमस्य सद्गतेरिति । कालादेरपि परस्य को महादेवः तद्भक्तानुरोधः सतां गतेश्च कथं मोहप्रवर्त्तकत्वं सन्त एव न मोहं प्रदर्शयन्ति कुतस्तेषामपि गतिः अवतारान्तरेपि भक्तैः सह लीलायामेव पराजयादिवर्णनं भक्तपूजाभ्यधिकेति प्रदर्शनार्थं तस्मात्प्रकृते मोहहेतोः कस्याप्यभावात् तु इति निश्चयेन कुतो मोहः ॥ ३२ ॥

तर्हि अत्र साल्वयुद्धे किं जातमित्याकाङ्क्षायामाह—तं शस्त्रपूगैः प्रहरन्तमोजसेति । अत्र केचित् मोहप्रदर्शनप्रभृतिसर्वमेव बाधितं किन्तु गृह एव विद्यमाने भगवति तस्मिन्नागते शस्त्रपूगैः प्रहरन्तं मारितवानित्याह अन्येत्विन्द्रप्रस्थादेवागत्य स्वसैन्यं शस्त्रैः प्रहरन्तं दृष्ट्वा मारितवानिति अपरेतु बाहुवधादिमोहप्रदर्शनं जातमेव केवलं भगवति मोह एव निषिद्धः न त्वन्य इति पश्चान्मोहाभाव एव पुनरागत्य शस्त्रैः प्रहरन्तामिति तत्र मतान्तरत्वात् कल्पान्तरे सर्वमेव यथार्थं भगवति तु तस्य सर्वस्यापि सप्रकरणस्य मोहस्य निषिद्धत्वात् अष्टाविंशे दिवसे केवलं स्वयमागत्य मारितवानिति एकः पक्षः समायौ वा समागत्य मारितवानिति शस्त्रपूगैः शस्त्रसमूहैः अवान्तरजातिभेदापन्नैः नानास्त्रोद्भवैर्वा ओजसा प्रहरन्तं साल्वं शरैस्त्रिभिर्विघातैरेवाच्छिनत् वर्म धनुः शिरोमणिश्च पुनरन्यैर्बाणैः सौभं चकारात्तश्च ततो निकटं समागतं सौभं बाणप्रहारैरानीतं गदया रुरोज पीडां सम्पादितवान् हेलाश्चर्यम् ॥ ३३ ॥

ततो यज्जातं तदाह—तत्कृष्णहस्तेरितयेति । प्रथमतः कालात्मा तत्रापि पूर्णा क्रियाशक्तिः तया च प्रेरिता गदा अत आध्यात्मिकादिसर्वरचकारणं निवृत्तत्वात् विघूर्णितं सत् गदया सह तोये सहस्रधा भूत्वा पपात गदयेत्यपवादो वा करणत्वन्तु प्रहार एव पुनर्हस्ते वा समागमनं ततः शाल्वस्तद्विसृज्य भूतलमास्थितः ॥ ३४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च साल्वमायया मोह एव तावत् कृष्णस्य न सम्भवेत् कुतस्तद्धेतुकौ वसुदेवविषयकस्नेहशोकौ सम्भवेतां तथा साल्वाद्भयमेव तस्य न सम्भवेत् कुतस्तद्धेतुकं शार्ङ्गपतनञ्चेत्याह—क शोकेति । शोकादयो द्विविधाः अज्ञसम्भवाः विज्ञसम्भवाश्च तत्र अज्ञे असर्वज्ञजने सम्भवन्ति ये ते वा क अखण्डितानि विज्ञानादीनि यस्य स परमेश्वरः कृष्णः क्वेति तस्माद्विज्ञे मायातीतलोके सम्भवन्ति ये ते चिन्मयाः शोकादयो भगवद्भक्ते भगवति च निखिलरसामृतमयस्वरूपे रसाङ्गभूतसञ्चारिनामानः सन्त्येव तेच दामोदरलीला गोपीपूर्वरागरासादिलीला सुव्यक्ता एव द्रष्टव्याः अत्र भयं क्वेति भयं पलायनहेतुभूतभयभिन्नं ज्ञेयम् अरिभयात् पलायनमित्युद्धवोक्तेः तत्तत्र वास्तवं चेतस्यासन्निदां बुद्धिभ्रमस्तदा न स्यादिति भागवतामृतोक्तेश्च इमामगृभ्णन् रसना ऽमृतस्येति सामान्ये अश्वाभिधानीमादत्त इतिवत् ॥ ३१ ॥

आधावतः सगदं तस्य बाहुं भल्लेन छित्त्वाऽथ रथाङ्गमद्भुतम् ।
वधाय शाल्वस्य लयार्कसन्निभं बिभ्रद्बभौ सार्क इवोदयाचलः ॥ ३५ ॥
जहार तेनैव शिरः सकुण्डलं किरीटयुक्तं (१) पुरुमायिनो हरिः ।
वज्रेण वृत्रस्य यथा पुरन्दरो बभूव हाहेति वचस्तदा नृणाम् ॥ ३६ ॥
तस्मिन्निपतिते पापे सौभे च गदया हते ।
नेदुर्दुन्दुभयो राजन् दिवि देवगणेरिताः ।
सखीनामपचितिं कुर्वन् दन्तवक्त्रो रुषाऽभ्ययात् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे
शाल्ववधे
सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शाल्वमायया मोहासम्भवे कैमुत्यमाह—यत्पादसेवया ऊर्जिता पुष्टा सा आत्मविद्या तया अनादिश्चासावात्मविपर्यय-ग्रहश्च अहं कृशः सुखी दुःखीत्यादिलक्षणः तं हिन्वन्ति दूरीकुर्वन्ति सन्तः ऐश्वरं पदं न लभन्ते तस्य सतां गतेः परमेश्वरस्य शाल्वस्य नरस्य मायया कुतो मोहो ऽज्ञानं तस्मात्त तद्वाक्यं सत्यमित्यर्थः ॥ ३२ ॥

तदेवं परमतं दूषयित्वा प्रकृतमनुसरति—तमिति । रुरोज बभञ्ज ॥ ३३ ॥

तत् सौभम् ॥ ३४—३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च असम्भवाः शोकादयः तत्र विमनस्क इत्यनेन शोकः निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिङ्गत इत्यनेन मोहः स्नेहाद्गमाषे प्राकृतो यथेत्यनेन स्नेहश्चोक्तः वेति चार्थे द्वितीयो वाशब्दः अनुक्तसङ्ग्रहार्थः कथं राममसम्भ्रान्तं जित्वाऽजेयं सुरासुरैः । शाल्वेनाल्पीयसा नीतः पिता मे इत्यनेनाशत्वं शाल्वः शौरेस्तु दोःसव्यं सशार्ङ्गं शार्ङ्गधन्वनः बिभेद इत्यादिना अनवहितत्वाख्यो दोषाः क्व अखण्डितानि विज्ञानज्ञानैश्वर्याणि यस्य सः विज्ञानं विविधं स्वगुणशक्त्यादिविषयकं ज्ञानं स्वविषयकम् एवंभूतः अखण्डितः पूर्णः श्रीकृष्णश्च क्व ॥ ३१ ॥

भगवतः शोकादिरहितत्वं कैमुतिकन्यायेन दर्शयति—यदिति । यस्य पादसेवया भक्त्या ऊर्जिता या आत्मविद्या "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" इति श्रीमुखवचनात् आत्मनो भगवतः स्वरूपगुणादिप्रत्यक्षानुभवरूपा विद्या तया अनाद्यात्मविपर्ययग्रहम् अनादेरात्मविपर्ययस्य अब्रह्मात्मकत्वस्य यो ग्रहो निर्बन्धस्तं हिन्वन्ति नाशयन्ति मुमुक्षवः ऐश्वरम् ईश्वरस्य भगवतः अपहतपाप्मत्वादिलक्षणं साम्यम् आत्मीयमात्मन एव आविर्भूतम "निरञ्जनः परमं साम्यमुपैति" मम साधर्म्यमागताः" इतिश्रुतिस्मृतिभ्याम् अनन्तं पुनरावृत्तिशून्यं "न स पुनरावर्तते" मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति श्रुतिस्मृतिभ्यां तस्य सतां मुमुक्षूणां गतेः गम्यते ऽनया इति गतिश्चेति करणव्युत्पत्तिः कर्मव्युत्पत्तिश्च श्रीपुरुषोत्तमाचार्येण वेदान्तरत्नमञ्जूषायां दर्शिताः एवम्भूतस्य मुक्तिप्रदस्य मुक्तगम्यस्य मोहः कुतः मोह इत्युपलक्षणं सर्वेषां शोकादीनामुक्तानामनुक्तानां प्राकृतगुणानां सर्वेषां परमतमयुक्तमित्यर्थः ॥ ३२ ॥

किं तर्हि युक्तं तदाह—तमित्यादि रुरोज बभञ्ज ॥ ३३—३७ ॥

भाषा टीका ।

अज्ञानी में होने वारे शोक मोह अथवा स्नेह अथवा भय वे सब कहां और जिसके विज्ञान ज्ञान ऐश्वर्य्य आदि अखण्डित और स्वरूप से अखण्डित एतादृश श्रीकृष्ण कहां ॥ ३१ ॥

जिस के चरणारविन्द की सेवा करकें पुष्कल सिद्ध भई आत्मविद्या सें अनादि काल के देहात्माभिमान रूप-पिशाच कों भक्तजन त्यागि देतेहैं और अनन्त ऐश्वर्य्य सम्पन्न परमात्मा को प्राप्त होते हैं उस सत्पुरुषों के परम पुरुषार्थ पुरुषोत्तम कों किस कारण सें मोह घटि सकताहै ॥ ३२ ॥

अमोघ पराक्रमी श्रीकृष्ण भगवान् शस्त्र समूहों सें बल प्रहार करने वारे उस शाल्व राजा कों बाणों से बेधित करकें उसके कवच धनुष मस्तक के मणिकों छेदन करते भए और शाल्व के सौभ विमान कों गदा करके भग्न कर देते भए ॥ ३३ ॥

श्रीकृष्ण के हस्त से चलाई भई गदा सें हजार प्रकार चून होकर वह सौभविमान समुद्र के जल में गिरपडा उस विमान कों छोडकर भूतलमें स्थित भया शाल्व राजा गदा को उठाकर शीघ्र हि श्रीकृष्ण के प्रतिचला ॥ ३४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

लयार्कसन्निभं प्रलयकालीनसूर्यसदृशम् ॥ ३५—३६ ॥

(१) पुरमायिनः इति सुबोधिनी पाठः

### श्रीधरस्वामिकृतभावार्थदीपिका ।

देवगणैरीरिताः वादिताः किञ्च सखीनामिति ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
सप्तसप्ततितमोध्यायः ॥ ७७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अद्भुतमेवाह-लयेति । वधाय बिभ्रत् श्रीकृष्णः यत्र कुत्सवधार्थं चक्रस्य तेजोभरप्रकाशः सूचितः तथा युद्धेऽपि श्रीभगवतो मनोहरशोभाभर इति ॥ ३५ ॥

पुरुमायिनः बहुलमायायुक्तस्यापि जहार छित्वा स्वसैनिकाग्रे विचकर्ष सकुण्डलमिति विशेषणाभ्यां तत्र सकौतुकमपि बोधयति हाहेति परमाद्भुतत्वात् ॥ ॥ ३६ ॥

नितरां पतिते मृते अपुनरावृत्तिं प्राप्ते सौभे च हते नाशिते सखीनामित्यर्द्धकम् । अपाचितिं वैरनिग्रहरूपेण प्रत्युपकारेणान्त्येष्टिमिव कुर्वन् कर्त्तुमभ्यगात्तदैव इति महानिर्बुद्धित्वं सूचितं तत्र हेतुः रुषेति ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां
सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पुरुमायिनः पुरुरूपमायावतः ॥ ३६—३७ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आधावत इति । अभ्यापततोऽस्य साल्वस्याङ्गदेन सहितं बाहुं भल्लेन बाणविशेषेण छित्वा (अथ) साल्वस्य वधार्थं प्रलयतुल्यं रथाङ्गं चक्रं बिभ्राणो बभौ यथा सार्कः सूर्यसहित उदयाचलस्तद्वत् ॥ ३५ ॥

जहारेति । पुरुमायिनः बहुविधमा(यावतः)यिनः साल्वस्य शिरः तेनैव चक्रेण जहार हृतवान् यथेन्द्रो वज्रेण वृत्रस्य शिरस्तद्वत् तदा नृणां हाहेति शब्दो बभूव ॥ ३६ ॥

अथ सानुजदन्तवक्त्रवधात्मकं हरेश्चेष्टितं वक्तुं तावत्प्रस्तौति सार्द्धेन-तस्मिन्निति । तस्मिन्साल्वे निपतिते हते च सति सखीनां साल्वादीनामपचितिं पारोक्ष्येणोपकृतिं कुर्वन् कर्त्तुमित्यर्थः । वर्णाधिक्यमार्षम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
सप्तसप्ततितमोऽध्यायः ॥ ७७॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

( मूलम् ) * देवदुन्दुभयो नेदुः ववर्षुः पुष्पवृष्टयः ।
स्तूयमानो मुनिगणैः सूतमागधवन्दिभिः ।
आजगाम वृतः सैन्यैः पुरीं द्वारवतीं हरिः ॥
सम्प्रविश्य पुरीं रम्यां पताकाखण्डमण्डिताम् ।
अलङ्कृतामलङ्कारैः सिक्तसम्मृष्टचत्वराम् ॥
पूजितो यदुभिर्वृद्धैः पौरजानपदैस्तथा ।
रमयन्नष्टसाहस्रमाहिषीः प्रेमविह्वलाः ॥
उवास देवकीपुत्रः सानन्दं कुरुनन्दन ॥०॥

पुरुमायिनः अनेकशतमायावतः ॥ ३६—३७ ॥

सानन्दं आनन्दसहितम् इत्यर्थे विषयानन्दः न स्वरूपानन्द इत्यर्थः । स्यात्सोऽनुपपन्नः "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः ॥ ० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
( श्रीविजयध्वजतीर्थरीत्या षडशीतितमोऽध्यायः ॥ ८६ ॥ )

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तसप्ततितमोऽध्यायः ॥७७॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो रथाङ्गेन मोचदानार्थम् अद्भुतं रथाङ्गं लयार्कसन्निभं दर्शनेनैव मृत्युभयजनकं बिभ्रत् भगवान् बभौ स तावतैव सर्वेषां प्रातःकाल इव महत्सुखं जातमित्याह—सार्क इवोदयाचलइति । किञ्चित् कालं शस्त्रं धृत्वा स्थितिः महादेवादिपरीक्षार्थो यद्यस्ति कश्चिदस्य रक्षकः तदा समायातु इति ॥ ३५ ॥

ततः न कस्यापि समागमने तेनैव शिरश्चिच्छेद अन्यार्थं चक्रं धृतमिति तुच्छत्वादस्य वधोऽन्येन भविष्यतीति तेनैवेत्युक्तं सकुण्डलमिति सर्वं देवाधिष्ठितमपि तत्रापि पुरमायिनः पुरलक्षणमाया यस्य एतादृशस्यापि वधे हेतुः हरिरिति सर्वदुःखहर्त्ता एतस्यैव च मोक्षार्थं किञ्च यद्ययं जीवेत् तदा सर्वोपद्रवं कुर्यादिति दृष्टान्तेनाह—वज्रेण वृत्रस्य यथा पुरन्दर इति । तदा तदीयानां नृणां हाहेति वचः अभूत् ॥ ३६ ॥

तावतापि युद्धं न निवृत्तमिति वक्तुमाह—तस्मिन्निपतित इति । भगवानक्लिष्टकर्मा तन्न मारितवान् किन्तु पापेनैव पतितः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सजातीयो भर्त्ता भवति महांश्चेत्तत्रापि स्नेहं कुर्यात् एतत् ज्ञापयितुमाहुः—यदुपतेरिति । अवलोको बाह्यस्नेहः आभ्यन्तरः तमयमप्राप्यैव अन्तर्बहिश्च पुरुकर्शिताः नन्वन्येन कथं न पुष्टा जायन्ते यथा मिष्टान्नाभावे यादृशेनापि पुष्टो भवति लोकस्तत्राह मुषितहृदया इति हृदयस्य मोषः पूर्वमेव जात इति येन साधनेन कश्चित् गृह्यते तत् भगवतैवापहृतं नातः परमन्येन पुष्टा भविष्यन्तीत्यर्थः ॥ २३ ॥

एवं बहिर्विचारयन्त्यः काश्चिद्गुणातीताः दूरे गताः ततोऽन्तःपुरएव नद्यास्तीरे वर्त्तमानं हंसं दृष्ट्वाहुः हंस स्वागतमिति तास्तु भगवति शुद्धाः सर्वथा दोषरहिताः स्वहितमात्रमेव भावयन्ति स्वस्य च हितं भगवत्सम्बन्धादेव स च सम्बन्धः मानवतीनां मानापनोदव्यतिरेकेण स्वतो न भवति ततोभगवान् मानापनोदनार्थमेनम्प्रस्थापितवान् अयंहिहंसःसदसद्विवेकज्ञाऽस्ति अतोऽस्माद् गुणातीताः भगवत्पार्श्वं नेष्यन्तीति निश्चित्य सम्बोधयन्ति हंसेति स्वार्थमागत इति कुशलं पृच्छन्ति शीघ्रं वयं त्वया न भविष्याम इति ज्ञापयितुं आस्यतामित्याहुः नन्वस्माकं पक्षिणां नित्यं क्षुधितानां तन्निवृत्त्यर्थमुपायः कर्त्तव्यः अतो गन्तव्यमितिचेत्तत्राहुः पिब पय इति अनेनैतदपि ज्ञापयन्ति अत्र स्थितो दुग्धमिव अस्मानेष्यसि अन्यत्र गतो जलमिव अल्पकमधुराः नेष्यसीति ननु स्थित्वा किङ्कर्त्तव्यमितिचेत्तत्राहुः—ब्रूह्यङ्ग शौरेः कथामिति पितृनाम्ना शौर्यमुपपादयन्त्यः कथासत्वमाहुः न जाम इति न वक्तव्यमित्याहुः दूतं त्वां नु विदामेति नु इति वितर्के पूर्वमपि हंसा दूता भवन्ति अतस्त्वमपि हंस इति आगते प्रयोजनान्तराभावात् दूतत्वमेव निर्द्धार्यत इत्यर्थः । अतो दूतत्वनिर्द्धारार्थं कथां कथय नत्वपृष्टं नोच्यत इति चेत्तत्राहुः कच्चिदजितः स्वस्त्यास्त इति अजितत्वात् कुशलमस्त्येव परं सर्वान् मारयन् व्यग्रो भवेत् तदस्ति न वेति प्रश्नः अथवा स्वस्तिकल्याणरूपेण शुद्धरूपेण किमस्ति शयनादुत्थिता नारी शुची स्यादशुचिः पुमान् इतिवाक्यात्सम्बन्धे जाते अन्यथाभावो भवतीति तथा सति स्वस्य तदानीं गमनं व्यर्थमेवेति अजितत्वात् पराजयाभावोपीति सन्देहात्प्रश्नः कुशलेन वर्त्तत इत्यङ्गीकारेणैवोत्तरसिद्धौ प्रष्टव्यान्तरमाहुः उक्तं पुरा किं वा नश्चलसौहृदः स्मरतीति पुरा यदुक्तं न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामीति तत् पुरोक्तं तत्किं स्मरति नवेति अर्थः ननु सर्वथाऽस्मरणे को हेतुरिति चेत्तत्राहुः चलसौहृद इति नहि कोपि सर्वदा कमपि स्मरति सौहार्दे सति स्मरणं भगवांश्चलसौहृदः सर्वथा न स्मरति समागन्तव्यमिति चेत्तत्राहुः तं कस्माद्वयं भजाम इति कार्यान्तराणि निवर्त्तन्त्येव सौहार्देपि सन्देहः तस्मात् कारणाभावात् किमर्थं भजामः तत्रापि वयं प्रसिद्धाः तथापि कोऽयमत्याज्यः समागन्तव्यमिति चेत्तत्राहुः—हे क्षौद्रालापेति क्षौद्रवत् शर्करावत् मिष्ट आलापो यस्य तव केवलं वाङ्माधुर्ये क्षौद्रालापं यातीति क्षौद्रालाप यः तस्य सम्बोधनेपि मिष्टता व्यक्ता क्षुद्रस्य सम्बन्धीति निन्दापरतायां केचिदाहुः तमेव भगवन्तं आलापय कथय कामदं भगवन्तं आलापय गानेन आलापनं कुरु कामदं भगवन्तं प्रति वा क्षौद्रालापयोर्भवान् परमालापे लक्ष्म्या आलापो न कर्त्तव्यः तदाहुः श्रियमृत इति ननु सा परमभक्ता भगवदेकपरायणा कथं सह न गीयते इति चेत्तत्राहुः सैवैकनिष्ठाः स्त्रियइति सैव किं एकनिष्ठा अपितु सर्वाः स्त्रियः स्त्रीणां मध्य इति षष्ठी वा जात्यपेक्षया चैकवचनमिति केचित् एवं भावाः स्त्रियः पर्यवसितनिरोधा वर्णिताः ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भोः सिन्धुपत्न्यो नद्यः सम्प्रति यूयं शुष्यद्धृदाः स्थ तत्र कारणमाहुः इष्टभर्त्तुः सिन्धुपत्नीनामपि योऽभीष्टसुखप्रदो भर्त्ता यदुपतिस्तस्य प्रणयावलोकमप्राप्यैव यद्वद्वयं प्रणयावलोकमप्राप्य मुषितहृदयाः वाञ्छितचित्ताः स्म तद्वदेव यूयम् ॥ २३ ॥

कमपि हंसं दूतं प्रकल्प्याहुः हंसेति । ननु भवतीर्विना स कथं स्वस्त्यास्तामिति चेत् उक्तं पुरेति न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामीत्यादि स्वप्रेमवाक्यं स्मरति किं किम्वा चलसौहृदः सन् स्मरति ननु स्मृत्वैव मां प्रस्थापितवानतस्त्वदान्तिकमलस्त्वं तं भजतेति तत्राहुः कस्मादिति सचेदस्मान् न भजते नाप्यागच्छति तर्हि वयं कस्माद्भजामः कस्माद्वा यामः भोः करुणासिन्धवस्तर्हि कामपीडितस्य तस्य कथं निस्तारस्तत्राहुः—हे क्षौद्र ! क्षुद्रस्य दूत आलापय अत्रैव तं कामदं कामपीडितमपि दर्शनमात्रेणैव कामपीडाप्रदं आकारय स एवास्मान् आयातु ननु गर्ववत्यो वयं तं याम इतिभावः ओमिति गच्छन्तं तं मत्वा पुनराहुः, याह्यस्मान् वञ्चयित्वा एकाकिनी रमते तां श्रियमृते तमेव केवलमाकारय ननु सा तदेकनिष्ठा कथं परिहर्त्तुं शक्या स्यादत आहुः, स्त्रियामिति जातावेकवचनं स्त्रीष्वस्मासु मध्ये सा एव किमेकनिष्ठा ऐकान्तिकी ननु वयमित्यर्थः क्षौद्रालापमकामदमिति पाठे क्षौद्रं मधु तद्वन्मधुरालापमात्रं यस्य तं अकामदं अरतिप्रदं तं श्रियमृते वयं कस्माद्भजामः किन्त्वनाहूता सती सैव पुनः पुनर्भजतु यतोऽस्मादृश्यो मानिन्यः स्त्रियः स्त्रियां स्त्रीषु मध्ये एकनिष्ठाः एकस्मैव स्वमानसिद्धौ निष्ठा यासां ताः ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भोः सिन्धुपत्न्यः नद्यः यद्वत् यथा वयं यदुपतेः प्रणयावलोकमप्राप्य मुषितहृदयाः मुषितानि हृदयानि यासां ताः स्म प्रसिद्धं पुरुकर्शिताः तथा यूयमपि संप्रति ग्रीष्मे इष्टभर्त्तुः सिन्धोः प्रणयावलोकमप्राप्य तत्कृपादृष्टिफलं मेघद्वारा ऽमृतवर्षमलब्ध्वा शुष्यन्तो हृदा यासां ताः अपाहृताऽपमता कमलश्रीः याभ्यस्ताः बत अहो कष्टं कर्शिताः स्थ ॥ २३ ॥

हे हंस ! स्वागतं शोभनमागमनं जातम् आस्यतामुपविश्यताम् पयः क्षीरं पिब हे अङ्ग ! त्वां तु शौरेः दूतं विदाम अतः शौरेः कथां वार्त्तां ब्रूहि कच्चित् अजितः स्वस्त्यास्ते किम्वा नः अस्मान् प्रति पुरा उक्तं स्मरति ननु

इतीदृशेन भावेन कृष्णे योगेश्वरेश्वरे।
क्रियमाणेन माधव्यो लेभिरे परमां गतिम् ॥ २५ ॥
श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः।
उरुगायोरुगीतो वा पश्यन्तीनां कुतः पुनः ॥ २६ ॥
याः सम्पर्यचरन् प्रेम्णा पादसम्वाहनादिभिः।
जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः ॥ २७ ॥
एवं वेदोदितं धर्ममनुतिष्ठन् सतां गतिः।
गृहं धर्मार्थकामानां मुहुश्चादर्शयत्पदम् ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तत्र कः सन्देह इत्यत्राहुः—चलसौहृद इति। नैव स्मरतीति भावः तर्हि तं चलसौहृदं कस्माद्भजामः नैव भजाम इत्यर्थः एवं प्रेमभरपरवशतयाऽयुक्त्वापि तद्विरहसत्सहमानाः आहुः, हे सौद्र क्षुद्रकर्मन्! दूत अकामदं तं श्रीकृष्णं श्रियमृते आलापय ननु सा तदेकनिष्ठा कथं निवारणीयेत्यत्राहुः, स्त्रियां जाता-वेकवचनं स्त्रीषु मध्ये सैवैकानिष्ठा अपितु सर्वा वयं तदेक-निष्ठा इति भावः॥ २४॥

---

### भाषा टीका।

हे सिन्धुपत्नीनदीओ! यदु पति के प्रेम पूर्वक अवलोक को नहि प्राप्त होकर हमारे हृदय चुराए गए इसी से अत्यन्त कृश होकर जैसे हम स्थित हैं तैसेहि इस ग्रीष्म ऋतु में वांछित भर्त्ता समुद्र के प्रेम पूर्वक अवलोक को नहि प्राप्त होकर आप के देख सूख गए तथा कमलन की शोभा नष्ट होगई इसी से आप सब कृशित होकर स्थित होरही है॥ २३॥

हे प्रिय! हे हंस! तेरा आगमन समीचन भया बैठ जाय तू क्षीर पान कर तू श्रीकृष्ण की वार्त्ता कह हमतो को उस का दूत जानती है चलायमान मित्रता वारो परम स्वतन्त्र श्रीकृष्ण क्या मंगल पूर्वक रहता है और उसने जो पहले यह कहा रहा कि आप की सदृश प्रेम वारी अन्य स्त्री को मैं नहि देखता उस वचन का वह स्मरण करता है हे क्षौद्र! क्षुद्र के दूत हम उसका भजन क्यों करें जो लक्ष्मी हमारी वंचना कर इकेली रमण करती है उस को छोड़ कर काम के देने वारे केवल उसी को तू इहा बुलाइ हम स्त्रीन के मध्य में क्या वह लक्ष्मीहि केवल उस की सेवा में निष्ठा वारी है क्या हम नहि हैं॥ २४॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

तासां कृष्णे एवम्भूतो भावो नातिचित्रमित्याह—श्रुतमात्रोऽपीति। उरुभिर्गायैर्गीतैरुरुधा गीतो वा यैः कैश्चिदपि गीतैः कथाभिः कथञ्चिदपि गीतो वेत्यर्थः॥ २६—२७॥

पदं स्थानम्॥ २८—२९॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

इत्थं (भणितं) फलितवतादृशप्रेमवतीनां तासां माहात्म्यमाह—इतीति। अनेनोक्तरीतिकेन ईदृशेन चान्येनाप्येन कृष्णे स्वयं भगवति अत एव योगेश्वरे परमदुर्लभे इत्यर्थः। क्रियमाणेन सदा विधीयमानेनेति तस्मिंस्तासामतृप्तिर्भावानिवृत्तिश्च सूचिता माधव्यः मधुवंशोद्भवस्य तस्य पत्न्यः विष्णुः स्वयं भगवत्त्वात्सर्वव्यापकः श्रीकृष्ण एव तदीयां गतिं दशां लेभिरे यादृश एवासौ स्यात्ता अपि तादृश्य एव भवेयुरित्यर्थः। यद्वा स यथा सर्वव्यापकस्तथा ता अपि तस्य व्यापिका जाता इत्यर्थः। परमामिति पाठे त्वप्रकटरूपामलौकिकीमि-त्यर्थः। शानचः प्रयोगेण व्यवधानावचत्या कासाञ्चिदर्जुनपराजयानन्तरं गत्यन्तरन्तु मायिकमात्रमित्यभ्युपगतं तच्च युक्तं विवाहप्रसङ्गे तासां तत्स्वरूपशक्तित्वेन दर्शित-त्वात्॥ २५॥

तत्र तस्यापि माहात्म्यमाह—श्रुतमात्रोऽपि यः स्त्रीणां मन आकर्षति उरुभिर्गायैर्गीतैः प्रबन्धैरुरु यथा स्यात्तथा गीत-स्तद्विषयीकृतो वा किं पुनः तत्रापि साक्षात्पश्यन्तीनां तु किम्पुनर्वक्तव्यमित्यर्थः। कुतः पुनरितिपाठेऽपि स एवार्थः अत-स्तत्पत्नीनां स्वाभाविकमहाप्रेमवतीनां सदा तेन सह विहर-न्तीनां तासां तादृश एव भावो युक्तः काचिदन्यथा श्रवणन्तु मुनीनामपि मोहश्रवणादेव इत्यत्रोपदिश्यन्त्येके विस्मृत्य प्रागु-दाहृतमिति ( वदिति ) भावः॥ २६॥

अतस्ता एव धन्या मतवन्ये केवनेति भावविशेषोदये-नाह या इति। याः काश्चिदन्या अपि भर्तृबुद्ध्या भावनामात्र-गम्येनापि भर्तृत्वेन नतु साक्षाद्भर्तृत्वेन यः प्रेमा तेन यानि पादसम्वाहनादीनि मानसरूपाणि तैर्जगद्गुरुं परमपुरुषोत्तमं

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सम्यक् तदेकनिष्ठतया पर्य्यचरन् असेवन्त इत्यर्थः। तासां तपस्तदुपासनाभाग्यं किं वर्ण्यते अपितु वर्णयितुं न शक्यत इत्यर्थः। साक्षाद्भर्तृत्वेन नित्यमेव तथा सेवमानानां तासां वार्त्ता दूरत एवेति भावः॥ २७॥

तदेवं तस्य क्रीडात्वेनैव स्फुटं प्रतीयमानं चरितं वर्णयित्वा तादृशत्वमेव वैभवकर्मण्यप्यतिदिशन् सर्वेषामपि शर्मदत्वमाह—एवं; सताङ्गतिः तत्क्रीडैकपरभक्तानां गतिः सन् वेदोदितं धर्मं यज्ञादिकं च मुहुरनुतिष्ठन् गृहं खलु धर्मार्थकामानां पदमित्यप्यदर्शयत् अन्येभ्य उपादिशदिति यतः सतां तत्क्रीडैकजीवनानां धर्माद्यपराणाञ्च गतिराश्रयः॥ २८॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

याइति। माधव्यो माधवस्य [कृष्णस्य] स्त्रियः योगेश्वरेश्वरे कृष्णे क्रियमाणेनेत्थम्भूतेन भावेन वैष्णवीं गतिं मुक्तिं लेभिरे॥ २५॥

कृष्णे तासामित्थम्भूतो भावो नातिचित्रमित्याह—श्रुतमात्रोऽपीति। उरुभिर्बहुभिर्गाथैर्गीतस्तत्र बहुधा गीतो वा उरुगाय इति पृथक्पदं वा सन्धिस्त्वत्रार्षः किं बहुना यथा कथञ्चिच्छ्रुतमात्रोऽपि वा स्त्रीणां मनः प्रसह्य बलादाकर्षते किं पुनः साक्षात्पश्यन्तीनां स्त्रीणां मन आकर्षति इति॥ २६॥

यतस्तासामित्थम्भूतो भावोऽतस्ता अनुमोदते या इति तं कृष्णं जगद्गुरुं सर्वोत्तमं परमपुरुषमपि भर्तृबुद्ध्या याः पादसम्वाहनादिभिः प्रेम्णा पर्यचरन्नसेवन्त तासां तपः किम्वर्ण्यते कथं वर्ण्यत इत्यर्थः॥ २७॥

एवमिति। सतां गतिः स्वप्राप्त्युपायभूतोऽप्यनुतिष्ठन् गृहान् धर्मादीनां पदं स्थानमित्यदर्शयत् पदमिति दर्शयितुमन्वतिष्ठदित्यर्थः॥ २८॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

धर्मार्थकामानां पदं विषयं सन्दर्शयन् त्रिवर्गाणामाश्रयो गृहस्थ इति सम्यक् दर्शयन् द्वारकामावसति श्रीकृष्ण इति शेषः॥ २८॥

एवं शासति भूचक्रं चक्रपाणौ जनार्दने।
द्वारका वृष्णिनिलया योजनद्वादशायता॥ क॥

मुनिभिर्ब्राह्मणैश्चैव क्षत्रियैश्चापि वन्दिभिः।
आसीत्पूर्णा कुरुश्रेष्ठ सततं समलंकृता॥ ख॥

पिण्डारकात्कुरुक्षेत्राच्छालग्रामाच्च पुष्करात्।
वाराणस्याः प्रयागाच्च वेङ्कटाच्छ्रीगिरेरपि॥ ग॥

स्थानं दूराच्च गोकर्णाच्चन्द्रतीर्थाच्च शोभनात्।
सह्याद्रेश्च भृगुक्षेत्रात्कुमारनिलयादपि॥ घ॥

गोदावरीतटात्पुण्यान्नर्मदानिकटादपि।
शूर्पाकारात्प्रभासाच्च पुण्याद्बदरिकाश्रमात्॥ ङ॥

पावनान्नैमिषारण्याद्ब्रह्मदुर्गाच्च दुर्गमात्।
आययुर्मुनयः शान्ता नित्यव्रतपरायणाः॥ च॥

अब्भक्षा वायुभक्षाश्च निराहारा दृढव्रताः।
वल्कलाजिनसम्वीता जटिनश्चापि मुण्डिनः॥ छ॥

त्रिकालस्नायिनश्चैव मौनव्रतपरायणाः।
वेदस्वाध्यायनिरताः स्तुतिस्तोत्रपरायणाः॥ ज॥

ध्यानैकतानमनसः समाधौ कृतनिश्चयाः।
त्वगस्थिमात्रावयवाः शिराधमनिसन्तताः॥ झ॥

आगत्य मुनयो राजन् सर्वतः शान्तचेतसः।
उपासत महाराज नित्यं तत्त्वैकचिन्तकाः॥ ञ॥

क्षत्रियैश्च महावीर्यैर्ब्राह्मणैश्च तपोधनैः।
सूतैश्च मागधैश्चैव श्लोकस्तुतिपरायणैः॥ ट॥

पूर्णमङ्गलघोषैश्च वादित्राणां च निःस्वनैः।
निर्घुष्टा ब्रह्मघोषैश्च द्वारका कुरुनन्दन॥ ठ॥

क्षेत्राणामपि सर्वेषां तीर्थानां चाघहारिणाम्।
देवदेवस्य सान्निध्यादग्रण्या च बभूव सा॥ ड॥

ततः परं किमत्रेत्याह—एवमिति। भूचक्रं भूमण्डलं द्वारका मुन्यादिभिः पूर्णा निबिडा आसीदित्यन्वयः॥ क-ख॥

पिण्डारकादितीर्थक्षेत्रेभ्यो द्वारकोत्तमतीर्थमित्याह—पिण्डारकादित्यादिना॥ ग॥

कुमारनिलयात् कुमारपर्वतात्॥ घ-ङ॥

द्वारकामितिशेषः॥ च-छ॥

स्तुतिस्तोत्रपरायणाः स्तुतिप्रबन्धरूपा स्तोत्रप्रबन्धरूपं तज्जपैकपरायणाः॥ ज॥

ध्यानैकतानमनसः श्रीहरिगुणगणसञ्चिन्तनासामेव, विस्तृतमनसः समाधौ चित्तनिग्रहे कृतनिश्चयाः समीचीनाधिष्ठानलक्षणमुक्तौ वा शिरा रेखाः॥ झ॥

सर्वत आगत्य॥ञ-ठ॥

अग्रण्या अग्रण्येति च्छान्दसः उत्तमोत्तमाश्रया॥ ड॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इतीदृशेन वैष्णवीं सर्वत्र परिपूर्णस्य श्रीकृष्णस्य गतिं लेभिरे। तत्र क्रियमाणैरिति वर्त्तमानप्रयोगेण व्यवधानञ्च निरस्तं अतः कासाञ्चिदर्जुनपराजयानन्तरगत्यन्तरं मायिकमेवेत्यभ्युपगतम्॥ २५-४२॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

उपसंहरति—इतीत्यादि। एवं प्रकारेण भावेन वैचित्र्याख्येन भावेन कीदृशेन कृष्णे क्रियमाणेन कृष्णे कीदृशे योगेश्वराणामपीश्वरे माधव्यो महिष्यः वैष्णवीं गतिं लेभिरे वैष्णवीयां

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

गतिं रुक्मिणीसादृश्यं रुक्मिणी यथा नित्यप्रिया तथैवाभवन्नित्यर्थः विष्णुः श्रीकृष्णः तत्स्वरूपा वैष्णवी तस्येयमिति वा वैष्णवीह रुक्मिणी वैष्णवीयामित्यर्थे वैष्णवीति छान्दसं अथवा विष्णुः श्रीकृष्णः वैष्णवीं विष्णुदेवताकां गतिं प्रेम ॥ २५ ॥

ननु तासां यदीदृक् दशा भविष्यति तत् किमित्याह—श्रुतमात्रोपीत्यादि यः श्रीकृष्णः श्रुतमात्रोपि स्त्रीणां मनः प्रसह्य आकर्षते स एव पश्यन्तीनां यदाकर्षिष्यति तत् किं तत्रापि याभिः सह सततं विहरति तासां तु यदेवं भविष्यति तत्र किं वक्तव्यमिति शेषः । कीदृशः उरुगायैः पुण्यश्लोकैः उरु यथा स्यात्तथा गीतो वा इत्याश्चर्ये ॥ २६ ॥

तदेवाह याः सम्पर्य्यचरन्नित्यादि या माधव्यः जगद्गुरुं श्रीकृष्णं भर्तृबुद्ध्या सम्यक् परिचरुस्तत्रापि प्रेम्णा ननु कामेन पादसम्वाहनादिभिः क्रियाभिः तासां तपः किं वर्ण्यते तद्वर्णनीयं न भवति अन्यस्यान्यद्वर्णयितुं शक्यते न तदिति भावः अतो ये मां भजन्ति दाम्पत्ये तपसा व्रतचर्य्ययेति पूर्वं यद्व्याख्यातं तत्साधु ॥ २७-४६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्त्रीणां क्रीडायां प्राप्तः संसारः निवारितः ततो भगवद्भाव एवाविकल इति फलमुच्यते—इतीदृशेनेति । ईदृशो भावः सर्वप्रकारः लोकातीतिः भगवतैव भ्रान्ततामापादितः एतस्य मोक्षसाधकत्वं प्रमेयबलेनेति ज्ञापयितुमाह-कृष्णे योगेश्वरेश्वर इति । योगादयोपि फलं प्रयच्छन्ति भगवदनुग्रहात् स एव भगवान् कृष्ण इति तासां परमानन्दप्राप्तौ कः सन्देह इत्यर्थः । योगेश्वरा महादेवादयः तेषामपि नियन्ता साधनेषु योगो महानिति स एवोक्तः भक्तियोगादयोपि योगवाच्याः योगा एव माधव्यो माधवस्त्रियः परमा गतिर्भगवत्प्राप्तिः यदापितानां भगवत्सम्बद्धाः तस्मिन्नपि क्षणे भगवन्तं प्राप्तवत्य इत्यर्थः । नियमविधिवत् आसां फलसम्बन्धो व्याख्येयः अन्यथा शरीरात्मादिविकल्पानां माधव्यादिपदैः सह विरोध आपद्येत ॥ २५ ॥

ननु बहिर्मुखानां संसाराविष्टचित्तानां संसारप्रकारेणैव भगवन्तमपि प्रपन्नानां कथमेवं सर्वसङ्गातस्य भगवति प्रवेशस्तत्राह-श्रुतमात्रोपीति । भगवान् स्त्रीणामेवार्थेपि प्रादुर्भूत इत्युक्तं अतस्तदर्थमेवावतारात् तत्कार्यमावश्यकमिति सम्बन्धमात्रमपेक्ष्यते तत्र श्रवणमात्रमतिसुलभः सम्बन्ध इति स एवोक्तः मात्रशब्देन विचारादिव्युदासः प्रमेयबलमेवात्र मुख्यं इति स्वयं प्रसह्य मनः आकर्षते सर्वतः आकृष्य स्वस्मिन्नेव स्थापयिष्यतीत्यर्थः । तदपेक्षया कीर्त्तनकर्तृणां विशेषमाह, उरुगायोरुगीतानामिति । उरुगायो भगवान् उरु गीतो याभिः प्रहृतत्वाय विगीतत्वाय च योरुगायपदं तेषामपि मनः प्रसह्य आकर्षत इत्यर्थः । अत्रान्यत्रापि कैमुतिकन्यायो वक्तव्यः तथ एवा [illegible] एवोक्तः अत्राप्यनुसन्धेयः पुनरेकत्रैव स्थिताः पश्यन्ति तासां मनः आकर्षत इति कुतः सिद्धमेव भगवति मनःस्थितीत्यर्थः । विषयसौन्दर्येणैव मनसो वशीकरणात् न प्रमेयबलमप्यपेक्ष्यत इत्यर्थः ॥ २६ ॥

एताः त्रिविधाः सगुणा निरूपिताः गुणातीताः कैमुतिकन्यायेन सुतरां स्तौति—याः सम्पर्यचरन्निति । साक्षादेह सम्बन्धः सर्वभावेन यासां तत्रापि प्रेम्णेति आन्तरः सम्बन्धः पादसम्वाहनादिभिरिति बाह्यः जगद्गुरुमिति क्रिययापि विहितप्रकारेणापि तासां फलसिद्धावुपाय उक्तः भर्तृबुद्ध्येति तासां बुद्धिरप्युत्तमा निरूपिता ननु गोपिकावज्जारबुद्धिरिति भावः—

> बुद्धिः प्रपत्तिः सम्बन्धो द्विविधोपि विधेर्बलम् ।
> प्रमेयबलमित्यासां षोढा कृष्णे निरूपिताः ॥
> एकैकोपि महत्पुण्यसाध्यः षण्णान्तु का कथा ।
> अतस्तपः प्रशंसां हि तासामुक्तुं क ईशते ॥

तदाह—तासां किं वर्ण्यते तप इति ॥ २७ ॥

एवं सर्वासां निरोधमुक्त्वा प्रसङ्गादपि कृतं भगवतोपेक्षितमेवेति ज्ञापयितुं उपसंहारे निरूपयति—एवं वेदोदितं धर्ममिति । यथा निरोधोभिप्रेतः एवं वेदोदितोपि धर्मः लोकशिक्षार्थं भगवतोभिप्रेतः तत्र हेतुः सतां गतिरिति अन्यथा मार्गव्यवस्था न स्यात् इति सतां रक्षा न स्यादिति न केवलं वैदिकधर्म एव भगवतोभिप्रेतः किन्तु स्मार्तोपि त्रिवर्गः तदासक्तानां बुद्धिसङ्ग्रहार्थं अभिप्रेत इत्याह—गृहं धर्मार्थकामानामिति । त्रिवर्गास्पदं स्थानभूतं गृहमिति मुहुर्मुहुर्वारंवारं षोडशप्रकारेण प्रदर्शयत् लोकेभ्यः अदर्शयामास ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तासामेतादृशश्रीकृष्णविषयकभाववतीनां किं प्राप्यं वस्त्वित्यपेक्षायामाहुः—इतीति । वैष्णवीं वैष्णवप्राप्यां प्रेमभक्तिमेव तासामप्राकृतीनां भगवन्नित्यप्रेयसीनां सच्चिदानन्दवपुषां प्रेमरसास्वादाधिकभगवन्माधुर्य्यास्वादवतीनां पुनर्मोक्षादिफलप्राप्त्यसम्भवात् प्रेमाधिक्यमेवेत्यर्थः । यद्वा वैष्णवीं विष्णोस्तस्यैव कृष्णस्य भावोन्मादप्रौढिमतातादात्म्यमयीं रासान्तर्द्धाने व्रजसुन्दर्यो नानाप्रश्नाद्यनन्तरमुन्मादस्य प्रौढिम्ना यथा कृष्णोहं पश्यत गतिमिति कृष्णतादात्म्यमयीं लेभिरे तथैवैता अपि कुरर्य्यादिप्रश्नानन्तरं तामेवेत्यर्थः । प्रेमवैचित्र्यादिकृष्णतादात्म्यादिदशा अनुरागविलासा एव यदुमहिषीणामनुरागपर्य्यन्ता दशा श्रीमदुज्ज्वलनीलमणौ व्याख्याता एव ॥२५॥

उरुभिर्गाथैर्गानप्रबन्धैरुरु यथा स्यात्तथा गीतः स पश्यन्तीनां तु कुत इति वा शब्दस्त्वर्थे ॥ २६ ॥

तासां किं तपो वर्ण्यते नैव वर्ण्यते किन्तु नित्यसिद्धा एव ता इतिभावः यद्वा तासु मध्ये कासाञ्चित् साधनसिद्धानां कीदृशं प्राक्तनं तप इति चेत्तत्राह—या इति ॥ २७ ॥

एवं स्थानद्व ॥ २८—२९ ॥

---

आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनाम्।
आसन् षोडशसाहस्रं महिष्यश्च शताधिकम् ॥ २९ ॥
तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः।
रुक्मिणीप्रमुखा राजंस्तत्पुत्रांश्चानुपूर्वशः ॥ ३० ॥
एकैकस्यां दश दश कृष्णोऽजीजनदात्मजान्।
यावन्त्य आत्मनो भार्या अमोघगतिरीश्वरः ॥ ३१ ॥
तेषामुद्दामवीर्याणामष्टादश महारथाः।
आसन्नुदारयशसस्तेषां नामानि मे शृणु ॥ ३२ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।**

माधव्यः माधवस्त्रियः ॥ २५ ॥

उरुभिर्गायैर्गीतिरुरुधा गीतिः उरुगायोरुगीतः यः श्रुतमात्रोऽपि स्त्रीणां मनः प्रसह्य बलात् आकर्षते सः पश्यन्तीनां माधवीनां मनोहरोऽभूदिति कुतः पुनर्वक्तव्यम् ॥ २६-२७ ॥

सुहृत्सु तिष्ठन् आचरन् धर्मादीनां पदं ज्ञानमदर्श— यन् ॥ २८ ॥

**भाषा टीका।**

योगेश्वरन के भी ईश्वर श्रीकृष्ण के विषय में वर्त्तमान काल में किए इस प्रकार के अनुपम प्रेम भाव से श्रीकृष्ण की पत्नी लोग रहे ॥ २५ ॥

अनेक कथाओं से अनेक बार जिस का गान किया गया इसी से किसी प्रकार श्रवण मात्र होने से स्त्रीयों के मनको बलात्कार से हरण करने वारे श्रीकृष्ण नित्य प्रति दर्शन करने वारीन के मनको हरण करते हैं इस में क्या ॥ २६ ॥

जिन स्त्रीयों ने पति बुद्धि करके चरण सम्बाहनादि अनेक प्रकारों करके प्रेम के साथ जगत्के गुरु श्रीकृष्ण की परिचर्य्या करी है उनका तप हम से किसी प्रकार की वर्णन नहिं किया जासका ॥ २७ ॥

सत्पुरुषों के गति श्रीकृष्ण इस प्रकार वेदोक्त धर्म का निरन्तर आचर करत धर्म अर्थ काम का पद है यह इस दर्शाते भए ॥ २८ ॥

**श्रीधरस्वामिकृतभावार्थदीपिका।**

याः रुक्मिणीप्रमुखा अष्टावुदाहृताः प्राक् ॥ ३० ॥

एवमष्टोत्तरशताधिकषोडशसहस्रमहिषीणां पुत्रा लक्षमे-कमष्टोत्तरैकषष्टिसहस्राणि च भवन्ति ॥ ३१-३२ ॥

**श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।**

अथ तादृशगार्हस्थ्याङ्गभूतानां श्रीभगवत्पुत्रादीनां सर्वेषां वाक्यानामपि माहात्म्यमुक्त्वानुवादपूर्वकं वर्णयति—आस्थितस्ये-त्यादीनां परममुत्कृष्टं प्रायः सर्वेषामप्याश्रमिणामाश्रयत्वात् तदुक्तम्—

भिक्षाभुजश्च ये केचित्परिव्राड्ब्रह्मचारिणः।
तेऽप्यत्रैव प्रतिष्ठन्ते गार्हस्थ्यं तेन वै वरम् ॥ इति

यद्वा परं मुख्यं मुख्यकल्पत्वेन कृतत्वात् कृष्णस्य अशेषैश्वर्य्य-प्रकटनार्थमवतीर्णस्य स्वयं भगवतः यद्वा तद्धर्मानुष्ठान-माधुर्य्येणापि सर्वचित्ताकर्षकस्य तुशब्दो भेदे महामहिष्यस्ता-वदष्टावासन्नेव षोडशसाहस्रं महिष्यस्तु शताधिकं यथा स्युस्तथा ऽऽसन् महिष्यश्चेति पाठेऽपि स एवार्थः ॥ २९ ॥

स्त्रीषु तज्जातिषु रत्नानां श्रेष्ठतमानां तासां पुत्राश्चानु-क्रमेणोदाहृता एव ॥ ३० ॥

तदेवानुख्यापयति एकैकस्यामिति। यावत्यो भार्य्या-स्तावतीष्वेव एकैकस्यां दशदशैवात्मजान् स्वानुरूपान् पुत्रानित्यर्थः। हि यतः अमोघरतिः अव्यर्थसुरतवृत्तान्तः एवं तासु सर्वप्राकट्यसमयं दशैव ऋतवो दशैव च स्वेच्छया तदी-यपरमज्योतिर्गर्भचरमधात्वाधानानि जह्निरे इति ज्ञेयं तत्र हेतुरीश्वरः इति। तस्यैश्वरत्वात्तैतावदेवाश्चर्यमिति भावः ॥ ३१ ॥

उद्दामवीर्याणामिति यद्यपि सर्वे एव ते महाप्रभावास्त-थापि तेषां मध्येऽष्टादशैवेयं महारथा महाबलविक्रमाः अत एवोदारयशसः यद्वा महारथा इति वीरत्वे श्रेष्ठ्ये सत्क-र्मादावप्याह उदारेति मे मत्तः शृण्विति। अन्ये केचित् तेषां नामान्तराण्यप्याहुः श्रेष्ठ्यनिर्धारणात् मया तु सर्वे निर्धार्य्यैव कथ्यत इति भावः ॥ ३२ ॥

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।**

अथ भगवतः सपत्नीषु सन्तानमनुवर्णयितुं प्रस्तौति

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ॥

आस्थितस्येति परं गृहमेधिनां धर्ममास्थितस्यानुतिष्ठतः कृष्णस्य महिष्यः पत्न्यः आसन् ॥ २९ ॥

तासां स्त्रीरत्नरूपाणां मध्येऽष्टौ रुक्मिणीप्रमुखाः याः पूर्वं कथिताः सर्वशः, सर्वाश्च सहपुत्राः पुत्रवत्यएवेत्यर्थः । तासां पुत्रास्तु लक्षमेकमशीत्युत्तरैकषष्टिसहस्राणि भवन्ति ॥ ३० ॥

तदेवाह—एकैकस्यां इति । अजीजनज्जनयामास आत्मनः स्वस्य यावत्यो भार्यास्तासामेकैकस्यां इति सम्बन्धः तत्र हेतुत्वेन कृष्णं विशिनष्टि अमोघगतिरप्रतिहतसङ्कल्पः ॥ ३१ ॥

तेषामुक्तसङ्ख्यानां पुत्राणां मध्ये उदारयशसः विपुलयशस्विनः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्णस्य षोडशसहस्रमहिष्यः ॥ २९ ॥

तासां मध्ये या रुक्मिणीप्रमुखा अष्टौ महिष्यः प्रागुक्ताः अनुपूर्वशः तत्पुत्राश्चोक्ताः ॥ ३० ॥

आत्मनो यावत्यो भार्याः तास्वेकस्यामेकस्यां भार्यायां दशदशाम्भसानजीजनत् ॥ ३१ ॥

तेषां पुत्राणां मध्ये अष्टादशमहारथाः आसन् ॥३२—३४॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवतो धर्मपरत्वमुक्त्वा स्त्रीणामतथात्वे गार्हस्थ्यं धर्मविरुद्धमिति तासामपि धर्मपरत्वं वक्तुमाह—आस्थितस्येति । परमोत्कर्षापन्नं धर्ममाश्रितस्य कृष्णस्य स्वरूपत एकस्य गृहमेधिनां गृहस्थत्वेन नानारूपस्य षोडशसाहस्रं महिषामासीत् महिष्य इति षष्ठ्येकवचनं यथा एकः कृष्णः बहवो गृहस्थाः तथैव महिषीषोडशसहस्रसङ्ख्या युक्तेत्यर्थः तुशब्दः प्रकारान्तरं वारयति शताधिकमिति सहस्रस्य विशेषणं शतसङ्ख्यायुक्ताभ्योप्यधिकागित्यर्थः एकापि शतस्त्रीभ्योऽप्यधिका सर्वभावेनेति ॥ २९ ॥

एवं धर्मार्थतां निरूप्य प्रजासम्पत्त्यर्थतापि तासां मुख्येति उपसंहारे तदप्याह—तासां स्त्रीरत्नभूतानामिति । यद्यपि सर्वासामेव दशपुत्रास्तथापि मुख्या एव कथिता इति उपसंहारे ता एवानुवदति तासां स्त्रीरत्नभूतानां सर्वा एव सर्वतोत्कृष्टा इति रत्नपदप्रयोगः तत्रापि अष्टौ याः प्रागुदाहृताः रुक्मिणीप्रमुखाः—

> रुक्मिणीसत्यभामा च कालिन्दी ऋक्षकन्यका ।
> सत्या भद्रा मित्रविन्दा लक्ष्मणेत्यष्टनायिकाः ॥

राजन्निति सम्बोधनं स्त्रीबाहुल्यरसाभिज्ञानार्थं तत्पुत्राश्च उदाहृताः आनुपूर्वशः ज्येष्ठानुक्रमेण चकारात्पौत्रोऽप्युक्त इति ज्ञापितम् ॥ ३० ॥

अनुक्तानां सर्वासां तुल्यत्वाय पुत्रादिसम्पत्तिमाह—एकैकस्यां दशदशेति । इच्छया पुत्रत्वव्यावृत्त्यर्थं आत्मजपदं प्रायिकव्यावृत्त्यर्थं यावत्य इति दश भावा भवन्तीति सर्वेष्वपि भावेषु भगवान् अमोघरतिः फलपर्यवसाने अमोघत्वं ननु दशदशैव कथमुत्पादिताः दशास्यां पुत्रानाधेहीति श्रुतेरिति चेत्तथापि नैतल्लोके नियतं तत्राह, ईश्वर इति । अशक्ताः श्रुत्यर्थपरिपालनं मा कुर्वन्तु नाम शक्ताः कुर्वन्तीत्यर्थः ॥ ३१ ॥

धर्मार्थमेव भगवता पुत्रा उत्पादिता इति अष्टादशविद्यास्थानीयाः अष्टादशपुत्राः महावीर्या निरूप्यन्ते—तेषामुद्दामवीर्याणामिति—

> लक्षं षष्टिःसहस्राणि तथाशीतिर्निरूपिताः ।
> केचित्सहस्रमाधिकं प्राहुर्नैतन्मतं सताम् ॥
> तेषां पुत्राणां मध्ये अष्टादश महारथाः ।
> सर्व एव च उद्दामवीर्याः वस्तुतस्तु सर्व एव महारथाः ॥

तथापि तावद्भिर्महारथत्वं प्रकटीकृतमिति ज्ञापयति । यास्त्विति विद्यानां प्रामाण्यसिद्ध्यर्थं तावद्भिरेव वीर्यं प्रकटीकृतं भगवति विद्यमाना त्वमेषां च प्रयोजनम् ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

या रुक्मिणीप्रमुखा अष्टौ ता उदाहृता उक्ताः तत्पुत्राश्च, उदाहृता उक्ताः प्रागेव ॥ ३० ॥

अमोघरतिः अव्यर्थकामः अव्यर्थसङ्कल्प इति यावत् ॥ ३१–३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चकारादष्टाधिकाश्च ॥ २९ ॥

तासां अष्टोत्तरशतकषोडशसहस्रसंख्याकानां मध्ये याः रुक्मिणीप्रमुखा अष्टौ ताः तत्पुत्राश्च प्राधान्यविवक्षया उदाहृताः प्रागेव ॥ ३०—३२ ॥

---

भाषाटीका ।

गृहस्थों परम धर्म का आचरता करने वारे श्रीकृष्ण की सोरह हजार एकसौ आठ पटराणी रहीं ॥ २९ ॥

हे राजन् स्त्रीयों में रत्न रूप उन स्त्रियों के मध्य में रुक्मिणी आदि जो आठ पटराणी के पहले कही गई है उनके पुत्र भी क्रम से कहे गए हैं ॥ ३० ॥

जितनी अपनी भार्य्या रहीं उन में अमोघ गति श्रीकृष्ण ने एक २ दश २ पुत्र उत्पन्न किए किए ॥ ३१ ॥

अति श्रेष्ठ पराक्रम वारे उन पुत्रों के मध्य में उदार यश वारे अठारह पुत्र महारथी भए उनके नामन को हम से तुम श्रवण करो ॥ ३२ ॥

प्रद्युम्नश्चानिरुद्धश्च दीप्तिमान् भानुरेव च ।
साम्बो मधुर्बृहद्भानुश्चित्रभानुर्वृकोऽरुणः ॥ ३३ ॥
पुष्करो वेदबाहुश्च श्रुतदेवः सुनन्दनः ।
चित्रबाहुर्विरूपश्च कविर्न्यग्रोध एव च ॥ ३४ ॥
वीर०पाठः (त्रिवक्राया उपक्रोशः पुत्रः कृष्णमनुव्रतः ।
शिष्यः साक्षान्नारदस्य दधौ व्रतमखण्डितम् ॥ क ॥
*तेनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मुक्तिमान् भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ॥ख॥)
एतेषामपि राजेन्द्र तनुजानां मधुद्विषः ।
प्रद्युम्न आसीत्प्रथमः पितृवद्रुक्मिणीसुतः ॥ ३५ ॥
स रुक्मिणो दुहितरमुपयेमे महारथः ।
तस्मात्सुतोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनिरुद्धश्चेति अतः पुत्राणां मध्ये समदशैव महारथाः ज्ञेयाः अथवा अनिरुद्धनामापि कश्चित्पुत्र एवेति ॥ ३३-४० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रद्युम्न इति युग्मकम् । अनिरुद्धाख्यः केचित्प्रागेकषष्टितमाध्याये उक्ता अपि दीप्तिमांस्ताम्रतप्ताद्या रोहिण्यास्तनयाद्धरेरित्याद्य शब्दाद्गृहीताः किञ्चान्यासां कासांचित्पुत्रेषु मुख्या ज्ञेयाः चित्रबर्हिस्थाने चित्रबाहुः क्वचित् वरूथस्थाने विरूपः क्वचित् ॥ ३३——३४ ॥

मधुद्विष इति । पितृपराक्रमवत्पुत्राणामपि पराक्रमः सूचितः तथापि तेषां मध्ये प्रथमः श्रेष्ठः तत्र हेतुः पितृवदिति पितृतुल्यत्वादित्यर्थः । तत्रापि हेतुः रुक्मिणीसुत इति सर्वमहिषीश्रेष्ठायाः श्रेष्ठपुत्रत्वादित्यर्थः । हे राजेन्द्रेति राजकुले सर्वत्र प्रसिद्ध्या त्वया विज्ञायतएवेति भावः ॥ ३५ ॥

महारथ इति राजवर्गनिर्जयेन युद्धमध्ये रुक्मवतीहरणात् ततस्तस्मात्प्रद्युम्नात् नागायुतस्य बलेनान्वित इति च लोकलीलानुकरणरीत्यैव वस्तुतस्त्वीश्वरएवेति ॥ ३६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

*येनोक्तं सात्वतं तन्त्रं यत्र वेदार्थसङ्ग्रहः ।
स्वयोगमायारचितैर्हयग्रमयजकैः ॥ ख ॥

येनोक्तमिति । सात्वतशास्त्रार्थविषयः कश्चिद्ग्रन्थः तेनापि सङ्ग्रहरूपेण वा प्रतिसौकर्याय कृत इत्यर्थः । श्रीभगवत्प्रणीतस्यार्वाचीनत्वायोगात् यत्र यस्मिन् अर्थः प्रतिपाद्यः सङ्गृह्यते इति सङ्ग्रहः सर्ववेदानां सङ्ग्राह्यः प्रतिपाद्यभूतः स्वयोगमायारचितैः स्वगतसङ्कल्पैः ॥ ख ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रद्युम्नश्चेति । अनिरुद्धनामापि कश्चित्प्रीत्रान्यः पुत्रः ॥ ३३——३४ ॥

त्रिवक्राया इति । उपक्रोशोनाम त्रिविक्रायाः पुत्रः सतु कृष्णमनुव्रतः अनुवर्त्तमानः साक्षान्नारदस्य शिष्यो भूत्वा अखण्डितमविच्छिन्नं यथा तथा चित्तं दधौ भगवत्समाधिनिष्ठो बभूवेत्यर्थः ॥ क ॥

तमेव विशिनष्टि-तेनेति । सात्वतं पञ्चरात्रम् उक्तं सात्वतशास्त्रार्थविषयः कश्चिद्ग्रन्थ विशेषः प्रतिपत्तिसौकर्यार्थंतिसङ्ग्रहविस्तररूपेण कृत इत्यर्थः । तस्यानादिशास्त्रस्यार्वाचीनत्वायोगात्तन्त्रं विशिनष्टि यदिति स्त्रीशूद्रादीनामपि वैष्णवः विष्णुप्रापकः संस्कारस्तापपुण्ड्रादि संस्कारः स्मृतः ॥ ख ॥

एतेषामपीति । मधुद्विषः श्रीकृष्णस्य तनूजानां पुत्राणामेतेषामष्टादशानां मध्ये यः प्रद्युम्नः रुक्मिणीपुत्रः पितृवद्रूपेण गुणैश्च पितृतुल्यः सर्वेषां प्रथम् आसीत् ॥ ३५ ॥

स प्रद्युम्नः रुक्मिणो मातुलस्य दुहितरमुपयेमे परिणीतवान् तस्यां भार्यायां सतः प्रद्युम्नादनिरुद्धोनाम नागायुतं बलः तस्य बलेपुत्रोऽभूत् ॥ ३६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्रिवक्रायाः सैरन्ध्र्याः स नारदस्तस्मै स्वशिष्याय अखण्डितं चित्तं पूर्वापरानुभवस्मरणसमर्थं ज्ञानं ददौ ॥ क ॥

स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः ।
वज्रस्तस्याभवद्यस्तु मौसलादवशेषितः ॥ ३७ ॥
प्रतिबाहुरभूत्तस्मात्सुबाहुस्तस्य चात्मजः ।
सुबाहोः शान्तसेनोऽभूच्छतसेनस्तु तत्सुतः ॥ ३८ ॥
न ह्येतस्मिन् कुले जाता अधना अबहुप्रजाः ।
अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे ॥ ३९ ॥
यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम् ।
सङ्ख्या न शक्यते कर्तुमपि वर्षायुतैर्नृप ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

येन नारदेन सात्वतं तन्त्रं पञ्चरात्रसंहिता यद्यं ज्ञात्वा पुमान् मूर्त्तिमान् निजरूपाभिव्यक्तिमान् भवेत् यत्र यस्मिंस्तन्त्रे स्त्रीशूद्रादीनां वैष्णवः संस्कारः स्मृतः विष्णु-विषयानुष्ठानेन शरीरशुद्धिः कथिता ॥ स ॥

तनुजानां पुत्राणाम् ॥ २१—३६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतो लोकप्रसिद्ध्यर्थं तेषां नामान्याह-प्रद्युम्न इति । द्वितीय-श्चारुदेष्णः अनिरुद्ध इति पाठेपि पुत्र एव कश्चिदनिरुद्धः तेषां अपि पुत्राः शतश इति पौत्राणां मध्ये एकेनैव महारथत्वं प्रकटीकृतमिति तमाह एतेषामपीति मधुद्विषस्तनुजानामिति अत्यन्तं सामर्थ्यं निरूपितं तत्रापि प्रथमस्य विशेषमाह प्रद्युम्न आसीत्प्रथम इति तस्य विशेषतो निरूपणस्य प्रयोजनमाह पितृवदिति वैशिष्ट्ये हेतुमाह—प्रथमो रुक्मिणी-सुत इति रुक्मिणी, श्रेष्ठा तत्रापि प्रथमो वीर्यवत्तरो भवति ॥ ३३-३५ ॥

वंशनिरूपणप्रस्तावे नवमस्कन्धशेषे भगवान्निरूपित इति मध्ये प्रश्नानुरोधेन वीर्याण्यपि निरूप्य तदन्ते शिष्टं वंश-माह—स रुक्मिणो दुहितरमिति । महारथ इति जित्वा हरणं द्योतितं ततः प्रद्युम्नात् अनिरुद्धोऽभूत् तस्य विशे-षतो निरूपणे प्रयोजनमाह नागायुतबलान्विते इति ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अनिरुद्धनामापि कश्चित्पुत्र एव ज्ञेयः पुत्रप्रकरणात् ॥ ३३-४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनिरुद्ध इति तन्नामापि कृष्णपुत्र एव कश्चिदासीदिति सूच्यते ॥ ३३—४० ॥

---

### भाषाटीका ।

प्रद्युम्न अनिरुद्ध दीप्तिमान् भानु साम्ब मधु बृहद्भानु चित्रभानु वृक अरुण ॥ ३३ ॥

पुष्कर वेदबाहु श्रुतदेव सुनन्दन चित्रबाहु विरूप कवि न्यग्रोध ॥ ३४ ॥

हे राजेन्द्र श्रीकृष्ण के इन अठारह पुत्रों में भी रुक्मिणी जी का प्रथम पुत्र प्रद्युम्न रूप करके पिता के समान रहा ॥ ३५ ॥

उस महारथी ने अपने मामा रुक्मिणी की पुत्री विवाही उस प्रद्युम्न ते रुक्मि की पुत्री में दश हजार हजार हस्तियों के पराक्रम धारा अनिरुद्ध नामा पुत्र भया ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न केवलं श्रीप्रद्युम्नएव मातुलेयीमुपयेमे किन्त्वनिरुद्धोपीति चापिशब्दार्थः दौहित्रो रुक्मिण एव ततस्तस्मादनिरु-द्धात् ॥ ३७ ॥

भद्रसेनस्य पुत्राहीनामनुक्तिः प्रायः साङ्कर्य्यादिवंशलोपा-रम्भात् श्रुतसेनस्त्विति पाठः क्वचित् ॥ ३८ ॥

एतस्मिन् भगवत्कुले शुद्धक्षत्रियपितृमातृपर्यन्ते अधनाः धनहीनाः ॥ ३९ ॥

विख्यातकर्मणामपि किंपुनरन्येषामित्यर्थः । अत एव श्रीमाथु-रेषु प्रसिद्धिरियं बहुकुटाराजानएव यादवाः षट्पञ्चाशत्को-टय इति ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सचाप्यनिरुद्धोपि रुक्मिणो दौहित्रः तस्य पौत्रीं जगृहे उपयेमे ततोनिरुद्धात्तस्यां वज्रो नाम पुत्रो बभूव तं वज्रं विशिनष्टि—यस्त्विति मौसलात् (ब्राह्मण) शापप्रयुक्तयदुकुलक्षय-कारान्मुसलादवशेषित इत्यर्थः । कृष्णेनेति शेषः ॥ ३७ ॥

तिस्रः कोट्यः सहस्राणामष्टाशीतिशतानि च ।
आसन् यदुकुलाचार्याः कुमाराणामिति श्रुतम् ॥ ४१ ॥
सङ्ख्यानं यादवानां कः करिष्यति महात्मनाम् ।
यत्रायुतानामयुतलक्षेणास्ते स आहुकः ॥ ४२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्माद्वज्रात्प्रतिबाहुः तस्य प्रतिबाहोरात्मजः सुबाहुः तत्सुतः धर्मक्षेमसुतः श्रुतसेनः ॥ ३८ ॥

सर्वान् वंश्यान्विशिनष्टि-नहीति । अधना निर्धनाः ॥ ३९ ॥

तेषामानन्त्यमाह—यदुवंशप्रसूतानामिति ॥४०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पौत्री पुत्रपुत्री दौहित्रः दुहितुः पुत्रः अनिरुद्धः—

निहते रुक्मिणी श्यालं नाब्रवीत्साध्वसाधु वा ।
रुक्मिणीबलयो राजन् स्नेहभङ्गभयाद्धरिः ॥

इत्यनेन सर्वसमस्य हरेः स्नेहभङ्गभयमुच्यते तत्कथं घटत इतीत्याशङ्का—

न स्नेहभङ्गो देव्यास्तु न मतं केशवस्य च ।
स्नेहभीत इवाथापि नोचे रुक्मिवधे हरिः ॥

इत्यादिना परिहर्तव्या अत्र श्रीमद्भगवत्पादैः सिंहावलोकनन्यायेनाध्यायैयत्तासूचनाय चेदं प्रमाणमुक्तं मौसलान्मुसलमुक्तात् ॥ ३७-३८ ॥

एतस्मिन् कुले अधनादिदोषयुक्तो न कश्चिद् इत्यन्वयः॥३९॥
तेषां यदुवंशप्रसूतानाम् ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततोपि वंशमाह—तचापीति । रुक्मिणः पौत्री दौहित्र इति पदत्रयेण कुलापसंसर्गदोषी निरूप्य तादृश एव कलौ स्थास्यन्तीति ज्ञापितं तदाह—वज्रस्तत्राभभूदिति । मौशलमुक्तावशेषितः उर्वरितः ततोपि वंशमाह-प्रतिबाहुरभूत्तस्येति तस्य वज्रनामस्य प्रतिबाहुः पुत्रो ऽभूत् तस्य च सुबाहुः सुबाहोः शान्तिसेनः तस्य च श्रुतसेन इति चतुर्विधपुरुषार्थसाधकाश्चत्वारो निरूपिताः ॥ ३७-३८ ॥

अन्येषां पुरुषार्थपर्यवसाने न भविष्यतीत्याशङ्क्य तन्निराकरणार्थमाह—न ह्येतस्मिन् कुल इति । यादवकुले राजन्निति सम्बोधनं तस्मसर्थं अधना दरिद्राः अप्रजाः यद्व्या बहवः पुत्रा इति वाक्यात् न केप्यपेक्षितपुत्रविहीना इत्यर्थः । एतद्वृद्धिरङ्कस्य आन्तरमाह अल्पायुषोल्पवीर्याश्चेति । एवं चतुर्भिर्गार्हस्थ्यं निरूप्य ब्रह्मचर्यमिव निरूपयत्याह अब्रह्मण्याश्चेति ॥ ३९ ॥

"अर्थकामौ तथा धर्मश्चिरजीवित्वमेव च । एतत्साधारणं प्रोक्तं वीर्यन्तु क्षत्रियत्वतः" ॥ ज्ञानार्थं तेषां संख्यावक्तव्येत्याह—यदुवंशप्रसूतानामिति । संख्या वर्त्तते परं कर्तुं अशक्या अज्ञानमेव महत्त्वसूचकमिति न योगजधर्मेण ज्ञात्वा कथनं एकेन पुरुषेण मार्कण्डेयवच्चिरजीविनापि वर्षायुतैरपि तेषां संख्या कर्तुं अशक्येत्यर्थः तर्हि कथं परिज्ञानं कोऽप्यर्बुदं यथा बुद्धिः पर्यवसितेति चेत्तत्राह—तिस्रःकोट्य इति। आदौ दृष्टाणां तिस्रःकोट्यः त्रिंशदर्बुदानि तत अष्टाशीतिशतानिच अष्टाधिकाष्टशीतिशतानि लक्षसंख्याभगवत्पुत्रेष्वेव निरूपितेति कोटिसंख्या सहस्रसंख्या शतसंख्या ततो न्यूनसंख्या लोकवत् एतावन्तः यदुकुलाचार्याः यदुकुलोद्भवा एव आचार्याः तत्कुमाराणामिति श्रुतमिति प्रमाणं बहूनां मध्ये कश्चिदाचार्यो भवितुमर्हति बालकानेकस्य स्थाने बहवोपि पठन्ति अनेनैव तेषां बहुत्वं ज्ञातव्यमित्यर्थः ॥ ४०—४१ ॥

---

भाषा टीका ।

रुक्मि के बेवते उस अनिरुद्ध नेभी रुक्मि की नातिनी विवाही उस अनिरुद्ध से उस में वज्र नामा पुत्र भया जो मूशल निमित्त से यदुकुल के क्षय ते भगवान् ने बचाय दिया ॥ ३७ ॥

उस वज्र का प्रति बाहु पुत्र भया सुबाहु का शांत सेन पुत्र भया उस का शतसेन पुत्र भया ॥ ३८ ॥

इस कुल में कोई दरिद्री नहि भए थोडी संतान वारे नहि भए अल्प आयु वारे नहि जन्मे अल्प पराक्रमी नहि जन्मे ब्राह्मणो के अभक्त नहि जन्मे किन्तु धनादि से संपन्न हि भए ॥ ३९ ॥

हे नृप ! समीचीन कर्मन से ख्याति वारे और यदुवंशी में उत्पन्न एतादृश पुरुषन की संख्या करने को हजार वर्षन से भी नहि होसकी है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सहस्राणामपरिमितानां कुमाराणामित्यन्वयः ॥ ४१ ॥

यदा प्रत्येकं बहूनध्यापयतामाचार्याणामियं सङ्ख्या तदपि श्रुतमात्रं ननु सम्यग् ज्ञायते तदा कुमाराणामेवं सङ्ख्यानं कर्तुं न शक्यते कुतः पुनः सर्वयादवानामिति ॥ ४२ ॥

देवासुराहवहता दैतेया ये सुदारुणाः ।
ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे ॥ ४३ ॥
तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले ।
अवतीर्णाः कुलशतं तेषामेकाधिकं नृप ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ते चोत्पन्ना इति प्रत्येकं बहुभीरूपैरिति ज्ञेयम् ॥ ४३ ॥

एवमेव यदुकुलेऽपि देवा इति तथाचोक्तम् सहस्रशः समुद्भूता देवा यदुकुले पृथगिति ॥ ४४—४६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

संख्यानाक्तौ हेतुमाह—तिस्र इति । यदुकुलस्याचार्य्याः अध्यापकाः सहस्राणां कुमाराणां इत्यन्वयादेकमेकं सहस्रमेकस्याचार्य्यस्य शिष्यमित्याचार्य्यसङ्ख्यैव सहस्रगुणिताकुमाराणां संख्येतिभावः । इत्येतच्छ्रुतं प्रसिद्धमेवेत्यर्थः श्रुतिरिति । पाठः क्वचित् ॥ ४१ ॥

अहो आस्तां तावत् सर्वेषां संख्या नित्यराजसेवकानामपि सा किलाशक्येत्याह—सङ्ख्यानमिति । महात्मनां मुख्यानामपि यत्र येषु मध्ये अयुतानायुतलक्षेण बिन्दुत्रयोदशयुक्तेनैकाङ्केन संख्याख्येन सह अयुतानामिति बहुत्वेन त्रित्वश्रुत शङ्खत्रयेणेत्यर्थः । आहुकः उग्रसेनः सदेति कदाचिच्च तदधिकेनापीत्यर्थः स इति पाठः क्वचित् आसीदिति वक्तव्ये आस्त इति नित्यलीलास्फूर्त्या साचाग्रे स्थापयिष्यते ॥ ४२ ॥

ते च यादवाः द्विविधाः देवा नित्यपार्षदाश्च तत्र देवानां यदुकुलावतीर्णत्वमसङ्ख्यत्वञ्च सहेतुकमाह—देवेति द्वाभ्यां सुदारुणा अत्युग्राः अत उत्तरजन्मन्यपि दृप्ताः सन्तः प्रजाः बबाधिरे ॥ ४३ ॥

अत एव तेषां निग्रहाय कचित् तद्द्वारा सहयोगेन च तत्तथ कोपाय यदोः कुले ऽवतीर्णाः क्वचित्प्रवेशेन क्वचित्पार्थक्येन च जाताःएकाधिकं कुलशतमिति तत्सद्व्यक्तीनां त्वसाभिरपि दुस्सङ्ख्यानत्वमिति भावः ॥ ४४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव कैमुत्यन्यायाभिप्रायेणाह—तिस्रः कोट्य इति । यदुकुलस्याचार्यास्तत्कुमाराणामनुशिक्षका अध्यापकाः तिस्रः कोट्यः सहस्राणां अष्टाशीतिः शतानिच सहस्राण्यध्यापका एवैतावन्तः किम्पुनस्त इत्यर्थः ॥ ४१ ॥

एकस्य वसुदेवस्यैव वंशजानां सङ्ख्यैवम्भूता किं पुनः सर्वेषां सम्भूतानामित्याह—सङ्ख्यानमिति । यत्र बहूनां वंशजो य आहुको वसुदेवः स ह्यवायुतानामयुतलक्षपुत्रः ॥ ४२ ॥

तेषां वीर्यशौर्यादिगुणनिरूपणायाह—देवेति । देवासुराहवे देवासुरयुद्धे हता ये अतिदारुणा दैतेयाः ते मनुष्येषु वैद्यमागधादिरूपेण जाताः दृप्ताः सन्तः प्रजा इति द्वितीयान्तं बबाधिरे पीडां कृतवन्तः ॥ ४३ ॥

तन्निग्राहायेति । तेषां निग्रहं कर्तुं प्रोक्ता आदिष्टाः देवाः यदोः कुले ऽवतीर्णाः येषामवतीर्णानां कुलमेकाधिकशतं वृष्ण्यन्धकदाशार्हादिरूपेण एकाधिकशतभेदभिन्नमित्यर्थः ॥ ४४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सङ्ख्याज्ञानाभावेपि तदाचार्याणां सङ्ख्यां कामपि श्रावयामीत्याह तिस्र इति ॥ ४१ ॥

यत्र येषाम् ॥ ४२ ॥

देवांशानां यादवानां अवन्यामुत्पत्तिं निमित्तमाह देवेति ॥ ४३ ॥

यादवा देवा इत्यत्र किं प्रमाणमत्राह कुलशतमिति ॥ ४४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ते च यादवा द्विविधाः । देवाः नित्यपार्षदाश्च । तत्र देवानां यदुकुलावतीर्णत्वमसङ्ख्यात्वं च सहेतुकमाह देवेति द्वाभ्यां । नित्यपार्षदानान्तु ततोऽपि सङ्ख्यावैभवे श्रीभगवदेकगम्ये इत्याह ॥४३—४४॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तद्नेनैव प्रकारेण यादवानां सङ्ख्यां वदेत्याशङ्क्याह—सङ्ख्यानं यादवानां कः करिष्यतीति यादवाः स्वरूपतोपि सङ्ख्यातुमशक्याः आनन्त्यात् तत्रापि विशेषमाह—महात्मनामिति । एकैकस्य कोटिशः सेवकाः सन्तीति प्रधानगुणभावेन गणनायां सुतरामेवानन्त्यमित्यर्थः । अत एव मुख्ये सेवकानन्त्यं निरूपयति यत्रायुतानामिति अयुतानामयुतस्य लक्षेण न्यर्बुदसहस्रेण सेवकवर्गेण सह स आहुक उग्रसेनो राजा आस्ते एवं अन्येषामपि सेवकवर्गो ज्ञातव्यः ननु जीवा उत्तमाः केचन एवोत्पद्यन्ते एतावतां कथमेकदोत्पत्तिरिति चेत्तत्राह—देवासुराहवहता इति । देवानामसुराणां च पूर्वं बहव एव आहवाः सङ्ग्रामा जाताः तत्र ये दैतेयाः सुदारुणाः देवानां

तेषां प्रमाणं भगवान् प्रभुत्वेनाभवद्धरिः ।
येचानुवर्तिनस्तस्य ववृधुः सर्वयादवाः ॥ ४५ ॥
शय्यासनाटनालापक्रीडास्नानादिकर्मसु ।
न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः ॥ ४६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मूलभूतब्राह्मणनाशार्थं मनुष्येषु उत्पन्नाः चकारात् अन्येपि तत्सम्बन्धिनः तेषामुत्पत्तौ पूर्वधर्माः समागता इति ज्ञापनार्थमाह--प्रजा इमा बबाधिरे इति । ततो जगद्रक्षार्थं प्रवृत्तो भगवान् तेषां दैत्यानां निग्रहार्थं देवाः प्रोक्ता आज्ञप्ताः ततस्ते कोटिशो देवगणाः क्वचित्क्वचिदवतीर्णाः यदोः कुले तेषां मध्ये कुलानां शतमवतीर्णम् एकमधिकञ्च तत्रापि नायकरूपं नृपेति सम्बोधनं सन्तोषाय ॥ ४२-४४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यदुकुलस्य आचार्याः अध्यापकाः अष्टाशीतिशताधिकाः तिस्रः कोट्यः सहस्राणामसङ्ख्यानां कुमाराणामित्यर्थः ॥ ४१ ॥

अयुतानामिति बहुवचनं कपिञ्जलाधिकरणन्यायेन त्रित्वविशिष्टायां सङ्ख्यायां पर्य्यवसायितं अयुतानां अयुतलक्षेण विन्दुत्रयोदशयुक्तेनाङ्कत्रयेण शङ्कुत्रयेणेत्यर्थः आसीदिति वक्तव्ये आस्त इति नित्यलीलास्फुर्त्या उक्तम् ॥ ४२--४३ ॥

एकाधिकं कुलशतमिति कुलस्यैव सङ्ख्या कृता नतु व्यक्तीनामसङ्ख्यात्वादिति भावः । येच तस्य भगवतः अनुवर्त्तिनः नित्यपार्षदाः सर्वयादवरूपा ववृधुः तेषां सङ्ख्यानस्य प्रभुत्वे भगवान् हरिरेव प्रमाणमभूदित्यर्थः तत्सङ्ख्याया ब्रह्मादीनामपि दुर्ज्ञेयगोचरत्वादिति भावः ॥ ४४-४६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सहस्राणां बहूनां कुमाराणाम् ॥ ४१--४४ ॥

भाषाटीका

असंख्या कुमारन के पढाने वारे यदुकुल के आचार्य तीन कोटि अठाशीसौ रहे ऐसा सुना जाता है ॥ ४१ ॥

महात्मा यदुवंशीनकी संख्या को न करेगा, यदु वंशीन मध्य में तीन शङ्ख लक्षक सहितो नह राजा उग्रसेन रहा ॥ ४२ ॥

देवासुर संग्राम में मारे गए जो अति भयङ्कर दैत्य-जन वेहिमनुष्यन में उत्पन्न और गर्वीले होकर प्रजान की बाधा करते भए ॥ ४३ ॥

हे नृप उन दैत्यन के नाश करने के अर्थ भगवान् के उपदिष्ट होकर देवता लोग यदुकुल में जन्म लेते भए उन के एक अधिक सौ कुलहे ॥ ४४

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नित्यपार्षदानान्तु ततोपि सङ्ख्याविभवे श्रीभगवदेकगम्य इत्याह--तेषामिति । येच येतु तस्य श्रीभगवतो ऽनुवर्त्तिनो-नित्यपार्षदाः सर्वयादवा ववृधुः उत्तरोत्तरं सङ्ख्यातो वैभवतश्च वृद्धिं प्राप्ताः तेषां विभुत्वेच चेति चकारात्सङ्ख्यायां विभुत्वे भगवान् हरिरेव प्रमाणं साक्षी बभूवत्वन्यः ब्रह्मादिदुर्ज्ञेयगोचरत्वात् तेच देवगणतो विभिद्य यथोक्तं हरिवंशे श्रीमदक्रूरेण देवानाञ्च हितार्थाय वयं यातामनुष्यतामिति अत्र हरिर्विष्णुस्तस्य सर्वसमाहरणशक्तः सतो भगवान् पूर्णैश्वर्य्यादिषट्कस्वरूपश्च इति नामद्वयतात्पर्य्यम् ॥ ४५ ॥

तेषाञ्च वृष्णीनां परममेव माहात्म्यमित्याह--शय्येति । शय्यादिषु सन्तं जाग्रतमप्यात्मानं न विदुः श्रीभगवत्प्रेरणयैव सर्वं कुर्वन्ति नतु स्वयमनुसन्धाय तु शक्नुवन्तीत्यर्थः । यतः कृष्णचेतसः क्रीडाद्युतादिः आदिशब्दात् सौरतादयः इति यथावत् कुलमहो अविषह्य आस्ते इत्यादिकं नान्याङ्गत्वख्यापकं किन्तु तद्विरहोन्मादमयख्यापकमेव वक्ष्यते ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनामित्यादि ॥ ४६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेषामिति । तेषां कुलानां प्रभुत्वे निमित्ते भगवान् श्रीकृष्णरूपेण अभवदवततार ये सर्वे यादवास्ते तस्य श्रीकृष्णस्यानुवर्त्तिनः हेतुगर्भमिदं ववृधुरेधाञ्चक्रिरे ॥ ४५ ॥

किंत्वेते परमात्मबुद्ध्यान्ववर्त्तन्तेत्याह--शय्येति । वृष्णयो यदवः शय्यासनादिषु कृष्णे एव चेतो येषां तथाभूता अपि तं श्रीकृष्णं स्वमात्मानं स्वान्तरात्मानं परमात्मानमित्यर्थः । न विदुः किं तु यादवविशेषं विदुरितिभावः ॥ ४६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीकृष्णो भगवान् तेषां प्रभुत्वे सामर्थ्ये दैवे प्रमाणं यतः श्रीकृष्णो नारायणावतारः प्रसिद्धः तेषाममानुषसामर्थ्ये हेतुश्च ततो यादवा देवा इति सिद्धं एतदेव दृढीकारणाय पुनर्वक्ति येचेति ॥ ४५ ॥

स्वामिनं न विदुः शय्यादिषु सन्तं सह वर्तमानं आत्मानं स्वरूपभूतं श्रीनारायणम् ॥ ४६ ॥

तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित्पादशौचं-
विद्विट्स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः ॥
यन्नामामङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः-
कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य ॥ ४७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तेषामिति येच येषु तस्य श्री भगवतोऽनुचरेणा नित्यपार्षदाः सर्वेयादवा बभूवुस्तेषान्तु प्रभुत्वे चकारात् सङ्ख्यायां च भगवान् हरिरेव प्रमाणं साक्षी साक्षाद्द्रष्टा बभूव नत्वन्यः ॥ ४५—४६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु देवा एवावतीर्णास्तावन्त इत्यत्र किं प्रमाणमिति चेत्तत्राह—तेषां प्रमाणं भगवानिति । तेषां देवत्वे भगवानेव प्रमाणं कथं भगवतः प्रामाण्यमिति चेत्तत्राह—प्रभुत्वेचाभवदिति । अतस्तेषां प्रभोर्ज्ञातोभगवानतो ज्ञायते ते देवा इति न ह्यन्येषां भगवान् प्रभुर्भवति प्रभुसेवकयोः सजातीयत्वापेक्षणात् ननु त एव प्रेषणीयाः किमिति तैः सह भगवानागत इतिचेत्तत्राह, हरिरिति । तेषां दुःखापनोदनार्थमागतः अत एव कालादिकृतप्रतिबन्धाभावात् सर्व एव यादवा तत्रीयाः अन्येपि भगवतो ये अनुवर्तिनः ते सर्वेऽप्यनन्तं बभूवुरित्याह, येचानुवर्तिनस्तस्येति । प्रायिकत्वव्युदासाय सर्वपदं वृद्धिर्हि वटबीजाद्वटवत् ज्ञातव्या एवं प्रसङ्गात्तेषां माहात्म्यमानन्त्यं च भगवत्सम्बन्धावनिरूपित५ ॥ ४५ ॥

अत एव ते सर्वे सपरिकरा निरोधे निरूपिताः तत्र तेषामधिकारपन्नानां वैयर्थ्यसम्भवात् बहिर्मुखत्वसम्भवाद्व च निरोधः सपक्षो न भवेदिति शङ्कां निराकर्तुमाह—शय्यासनाटनालापेति । सप्तपदार्थाः भगवान् षड्गुण एव तेषां तथा जात इति ज्ञापयितुं निरूपिताः शय्या अशनं भोजनं अटनं परिभ्रमः आलापः वार्त्ता क्रीडा यूतादि स्नानं आसनं च एते सप्तपदार्थाः प्रकारपराः तत्रैश्वर्यादिधर्माः योजनीया तथा सति प्रकारतामापद्यन्ते किं बहुना सर्वात्मनासु आत्मानं यथा स्थानीयतं न विदुः अनेन प्रपञ्चविस्मृतिरुक्ता भगवदासक्तिमाह, कृष्णचेतस इति । कृष्ण एव चेतो येषां गोकुलस्थानां तु पूर्वमेव निरूपितं स्त्रीणां च राजसानां सात्त्विकानां चायं निरोध इति सम्पूर्णा निरोधलीला ॥ ४७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेषां कुलानां प्रभुत्वेन नियन्तृत्वेन प्रमाणां प्रवर्त्तकः भगवान् श्रीकृष्णः अभवद् यतो ये देवा यादवास्तस्य भगवतः अनुवर्तिनस्ते बभूवुः येत्वननुवर्तिनः असुराः कंसदुर्योधनादयस्तेन वबृधुरितिभावः ॥ ४५ ॥

यादवानां कृतार्थतामाह—शय्यासनेति ॥ ४६ ॥

भाषा टीका ।

जो भगवान् की आज्ञानुसारी होकर सब यादव कुल को प्राप्त भए उन यादवन के स्वामी भाव से युत श्रीकृष्ण हि उनकी संख्या के साक्षी रहे ॥ ४५ ॥

श्रीकृष्ण के विषय में चित्त वारे यादव लोग शय्या आसन अटन अलाप क्रीडा स्नान आदि कर्मन में वर्तमान निज शरीर को भी नहिं जानते भए अन्य के विस्मरण की न तो वार्त्ता हि कहा है ॥ ४६ ॥

श्रीधरस्वामीकृतभावार्थदीपिका ।

तस्मात्कृष्णकीर्तेः सर्वतीर्थोत्तमत्वं कृष्णस्य च सर्वदेवोत्तमत्वं न चित्रमित्याह—तीर्थञ्चक इति । इतःपूर्वं स्वस्सरिदेव सर्वतोधिकं तीर्थमित्यासीत् इदानीन्तु यदुषु यदजनि जातं तीर्थं श्रीकृष्णकीर्तिरूपमेतत्स्वस्सरिद्रूपं पादशौचं तीर्थमूनमल्पं चक्रे स्वयमेव सर्वतीर्थोपरि विराजत इत्यर्थः । श्रीकृष्णस्य विद्विषः शिशुपालादयः तत्सारूप्यं ययुरित्यपि नातिचित्रम् तस्य परमकारुणिकत्वात् तथेदञ्च न चित्रम् किं तत् अजितपरा अजिता केश्चिदप्यप्राप्ता परा सर्वतः परिपूर्णा श्रीः कृष्णस्यैव नान्यस्येति तदेवाह—यदर्थेऽन्येषां ब्रह्मादीनां यत्न इति ननु निरपेक्षं तमेव लक्ष्मीः श्रयत इति चित्रमेवेतिचेन्नहि परममङ्गलनामधेयत्वात्तस्येत्याह, यन्नामेति तदपि नाथेसरणापेक्षमित्याह, श्रुतमथ गदितमिति । सर्वधर्माश्रयत्वादपीत्याह, यत्कृतो गोत्रधर्म इति गोत्रेषु तत्तदृषिवंशेषु धर्मो यत्कृतो येन प्रवर्तितः तस्य क्षितिभरहरणं नैवचित्रमित्याह, कृष्णस्यैतदिति कालचक्रायुधस्येति सर्वसंहारककालमूर्तेर्विशेषतो दुरन्तप्रभावचक्रायुधस्य कियदेतदित्यर्थः ॥ ४७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवं यदुकुलरूपमधिष्ठानं प्रशस्य श्रीकृष्णरूपमधिष्ठातारं प्रशंसति । तीर्थमिति । कृष्णस्य स्वयं भगवत एतत्पूर्ववर्णितं क्षितिभारहरणं न चित्रं विबुधहृदयाविस्मयावहं न भवति यतः परमाण्वादिद्विपरार्धान्तरूपो यः कालः स एव चक्रं चक्रवच्छिद्य परिवर्त्तमानत्वात् तदेवायुधं सर्वसंहारसाधनं यस्य तस्य स्वतःसिद्धत्वात्तद्युद्धोद्यमेनालमिति भावः ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तद्विचित्रताबोधनाय तमेवं चित्राविशेषणैर्विशिनष्टि—यद् यतस्ता दृशोपि यदुषु लोककृपया अजनि जातः य एव खःसरिदाख्यं श्रीवामनपादशौचरूपं तीर्थमूनं चक्रे निजचरणरजःसम्बन्धियमुनादिभिरिति भावः—

गङ्गा शतगुणा पुण्या माथुरे मम मण्डले।
यमुना विश्रुता देवि नात्र कार्या विचारणा॥

इत्यादिवाराहात्—

यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः।
सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया॥
कोवा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः।
शुद्धिकामो न शृणुयाद्यशः कलिमलापहम्॥इति

श्रीशौनकस्य तत्प्रश्नकरणाच्च किञ्च विभक्तिविपरिणामात् यत् येन हेतुना स्निग्धा इव विद्विषः पूतनादयः यद्वा विद्विषं स्निग्धाः पितृभ्रात्रादयोपि स्वरूपं सर्वमूलभूतं श्रीभगवन्तमेव ययुः सद्वेषादिव पूतनापि सकुला त्वामेव देवापितेत्यादेः यत् यत्र श्रीः रूपादिसम्पत्तिपरा सर्वोत्कृष्टा अजिता अन्या स्पृष्टाचेत्यर्थः। यथोक्तं यन्मर्त्यलीलौपयिकमित्यादि अदृष्टान्यतमं लोके इत्युपक्रम्य तृतीयेस्मिन् भवेह वै इत्यादि यदर्थे यस्य दर्शनादिरूपार्थे अन्येषां महाकालपुराधिपादीनामपि यत्नः परमब्रह्मण्यदेवत्वेपि मुहुर्मुहुर्ब्राह्मणबालहरणब्राह्मणदुःखातिशयदानदोषानादरपूर्वकः प्रयासः यथोक्तं द्विजात्मजा मे युवयोर्दिदृक्षुणा इत्यादि श्रीहरिवंशे च—

त्वद्दर्शनार्थं ते बाला हृतास्तेन महात्मना।
विप्रार्थमेष्यते कृष्णो नागच्छेदन्यथेति हि॥ इति

अतएव यस्यैव नाम अथ कार्त्स्न्येन सर्वतोपि सामस्त्येन तदतिरिक्तसर्वपरित्याजनादिना अमङ्गलघ्नं तदुपलक्षणतया सर्वमङ्गलदात् च यथोक्तं ब्रह्माण्डपुराणे तन्नामाष्टोत्तरशतप्रसङ्गे—

सहस्रनाम्नां पुण्यानां त्रिरावृत्त्यातु यत्फलम्।
एकावृत्त्यातु कृष्णस्य नामैकं तत्प्रयच्छति॥ इति

तत्रापि विशेषः श्रुतं किमुत गदितमित्यर्थः। किञ्च यत्कृतो येनैवोपविष्टो गोत्रधर्मः अनादृषिपरम्पराप्राप्तो भगवद्धर्मः यथोक्तमेकादशे स्वयमेव—

कालेन नष्टा वाणीयं प्रलये वेदसंज्ञिता।
मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः॥इति

यद्वा गोत्रधर्मो वैष्णवधर्मः वैष्णवानां तद्गोत्रतया प्रसिद्धेः अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः" इति चतुर्थे यद्वा अगोत्रधर्मः सत्कुलाद्यपेक्षारहितः स एव धर्मो यत्कृतः।

मां हि पार्थ व्यपाश्रित्य येपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेपि यान्ति परां गतिम्।
किम्पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा॥

इतिहि श्रीगीतासु यद्वा अत्र जगति तादृशधर्मः सदासर्वत्रागः स्थिरः यथा द्वितीये नह्यतोन्यः शिवः पन्था इत्युपक्रम्य तदुपसंहारे—

तस्मात्सर्वात्मना राजन् हरिः सर्वत्र सर्वदा।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्तव्यो भगवान्नृणाम्॥

इति यद्वा गां पृथ्वीमपि त्रायते गोत्रः सचासौ धर्मश्च अपिचेत्सुदुराचार इत्यादिकं हि श्रीगीतासु मद्भक्तियुक्तो भुवनं पुनातीत्येकादशे च यद्वा प्रसिद्ध्या योगवृत्त्या च गोत्रस्य श्रीगोवर्द्धनस्य धर्मो मखरूपो येनैव कृतः भक्तवात्सल्यं दर्शयतेन्द्रमपि तुच्छीकृत्य प्रकाशितः यद्वा तदेव दर्शयता बलिमाददानेन गोत्रधर्मः शैलत्वमपि येन स्वस्मिन् प्रकाशितः यद्वा गोत्रधर्मः स्वदेहसम्बन्धभावनारूपो धर्मो यस्मिन् कृतो विहितः न कर्हिचिन्मत्परा इत्यादौ येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टमित्यादिवत् यद्वा श्रीनन्दादौ श्रीवसुदेवादौ श्रीयुधिष्ठिरादौ च गोत्रधर्मः स्वसम्बन्धपुरस्कृतप्रेमा येन कृतो यत्र वा तैः कृतः यद्वा गास्त्रायन्ते इति गोत्राः श्रीगोपाः तेषां धर्मः स्वभावः असमोर्द्ध्वप्रेमा येन यत्र वा कृतः यद्वा गोत्रधर्मः सर्वरूपातिक्रमिपरमरूपं गोपत्वं येन प्रकाशितमिति दिक् यच्छन्दस्तस्यैति लक्ष्यं अथ व्याख्यान्तरं खःसरित् पादशौचमूनं चक्रे इत्येतन्न चित्रं यतः विद्विट्स्निग्धा अपि स्वरूपं ययुः तथा तदपि न चित्रं यतोजितपरेत्यादिकं परम्परया योज्यम् अतः क्षितिभरहरणं नैव चित्रमित्यर्थः। तत्र च हेतुविशेषः कालेति। सर्वत्र हेतुः कृष्णस्येत्येवम्॥ ४७॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

स्वमात्मानं न विदुरित्यनेन तन्माहात्म्यं विदुरिति सूचितं तदेवान्तितरसाधारणं वदन्नत्याश्चर्यमेतद्भूभारापहरणमिति विस्मयमपनुदन्नाह—तीर्थमिति। हे नृप! इतःपूर्वं खःसरित् स्वर्नदी गङ्गैव सर्वतोधिकं तीर्थमासीदिदानीन्तु यदुषु यदजनि जातं तेषु जातं श्रीकृष्णकीर्तिरूपं तत्कर्तृखःसरिद्रूपं पादशौचं तीर्थमूनमल्पं चक्रे यद्यशोरूपं तीर्थमेव सर्वतीर्थोपरि विराजत इति भावः। तथा द्विषन्तः शत्रवः स्निग्धा अनुरक्ताश्च तत्स्वरूपं ययुः प्रापुः स्वमसाधारणं रूपमाकृतिः तत्साधर्म्यमिति यावत् तत्प्रापुः प्रीत्यप्रीत्यात्मकस्य स्वविषयस्य ज्ञानस्य साधर्म्यप्रापणस्वाभाव्यादितिभावः तथा अजितपदाः केश्चिदप्यप्राप्तपदा श्रीश्च यस्यैवेति शेषः यस्यैवानन्यार्हशेषभूतेत्यर्थः। तां श्रियं विशिनष्टि—यदर्थेऽन्यत्र इति। यदर्थं ऽन्ययत्नः यच्छ्रीकटाक्षलेशप्रसरणार्थं अन्येषां ब्रह्मादीनां यत्नः श्रमः भवति इत्यर्थः किञ्च यस्य भगवतो नाम श्रुतमधिगतं (वक्तरिसतिश्रवा) गदितं उच्चरितं श्रोतरि सति अर्थज्ञानरहितमपि अमङ्गलघ्नं कृतनाशनं किञ्च गोत्रेषु तत्तद्वृष्णिवंशेषु धर्मो यत्कृतः येन प्रवर्त्तितः तस्यैतस्य श्रीकृष्णस्यैतन्न चित्रं किं तत् यत् क्षितिभरहरणं तत्र हेतुत्वेन पुनस्तंविशिनष्टि कालचक्रायुधस्येति कालचक्रं कालाभिमानिसुदर्शनाख्यं चक्रमायुधं यस्य तस्य कालायत्तं हि सर्वमिति भावः॥ ४७॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ईजे क्रतुभिरात्मानं सर्ववेदार्थसङ्ग्रहम्।
स्वयोगमायारचितैः कुरुक्षेत्रे द्विषद्समाः॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्णगार्ग्यसितावन्ति रामाचार्योद्धवेश्वरः ।
दीक्षितोऽग्रण्यपत्नीभिः पुण्यश्लोकसहाग्रणीः ॥

सर्ववेदार्थत्वेन सर्ववेदविषयत्वेन सम्यग्ग्रहो ग्रहणं यस्य स तथा तं स्वयोगमायया स्वरूपसामर्थ्येन रचितैरुत्पादितैः कृष्णो वेदव्यासः गार्ग्यो विश्वामित्रः असितः आवन्तिः सान्दीपनिः रामः एत आचार्या यस्य कृष्णस्य सः उद्धवस्य ईश्वरः उद्धवेश्वरः कृष्णगार्ग्यसितावन्तिरामाचार्यश्चासौ उद्धवेश्वरश्च तथा अग्रण्यपत्नीभिः रुक्मिण्यादिश्रेष्ठपत्नीभिः सह सन्दीक्षितः अग्रणीः सर्वोत्तमः ॥ श्रीकृष्णस्मरणार्थं सङ्क्षिप्य तान्गुणान् कथयति—तीर्थमिति । तीर्थं कीर्तिलक्षणं नृणां चक्रे यत् यः यदुष्वजनि प्रादुर्भूतः यस्य पादशौचं पादप्रक्षालनजलं स्वःसरित्स्वर्गनदी गङ्गाभूत् यस्य स्वरूपं ऐश्वर्यादिषड्गुणैरासं पूर्णं यस्य उरसि वक्ष उपरि रमा सर्वदास्ते यस्य शास्त्रं शासकं वचनं तत्प्रमाणं लोकस्येति शेषः यच्छास्त्रं वेदादिशास्त्रं तत्प्रमाणमिति वा सदसद्व्यक्तयः कार्यकारणव्यक्तयः सम्पद्यमाना यदनुकूलत्वेन सत्तासम्बन्धिन्यः धर्मा यत्र यद्विषयत्वेन वर्तन्ते तस्य कृष्णस्यैतत् क्षितिभारहरणं न चित्रं किन्त्वस्माकमेव हेत्वन्तरमाह कालेति ॥ ४७—४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

तदेवं यदुकुलरूपमधिष्ठानं प्रशस्य श्रीकृष्णरूपमधिष्ठातारं प्रशंसति कृष्णस्य स्वयं भगवत एतत् पूर्ववर्णितं क्षितिभारहरणं न चित्रं विबुधहृदयविस्मयावहं न भवति यतः परमाण्वादिद्विपरार्द्धान्तरूपो यः कालः स एव चक्रं चक्रवद्धयवच्छिद्ये परिवर्त्तगतित्वात् तदेव चायुधं सर्वसंहारसाधनं यस्य तस्य स्वतः सिद्धोद्यमत्वात् तदर्थोद्यमे मानमिति भावः । तदचित्रताबोधनाय तमेव चित्रविशेषणैर्विशिनष्टि । यत् यस्तादृशोऽपि यदुषु लोककृपया अजनि जातः स एव स्वस्सरिदाख्यं श्रीवामनपादशौचरूपं तीर्थमूनं चक्रे निजचरणरजःसम्बन्धियमुनादिभिरिति भावः । गङ्गाशतगुणा प्रायो माथुरे मम मण्डले । यमुना विश्रुता देवि नात्र कार्या विचारणा ॥ इति वाराहात् यत्पादसंश्रयाः सूतेत्यादि श्रीशौनकतत्प्रश्नप्रकरणाच्च किञ्च विपरिणामात् यत् येन हेतुना स्निग्धा इव विद्विषः पूतनादयश्च यद्वा विद्विषः स्निग्धाः पितृमात्रादयोऽपि स्वरूपं सर्वमूलभूतं श्रीभगवत्त्वमेव ययुः सद्वेषादिव पूतनापि सकुला त्वामेव देवापितेत्यादेः । यत् यत् श्रीरूपादिसम्पत्तिः अजिता अन्यास्पृष्टा परा सर्वोत्कृष्टा चेत्यर्थः । यथोक्तं यन्मर्त्यलीलौपयिकमित्यादि यदर्थं यस्य दर्शनरूपेत्यर्थः अन्येषां महाकालपुराधिपानामपि यत्नः यथोक्तं द्विजात्मजा मे युवयोर्दिदृक्षुणेत्यादि अतएव यस्यैव नाम अथ कार्त्स्न्येन सर्वतोऽपि सामर्थ्येन तदतिरिक्तमपहरेत्याजनादिना अमङ्गलघ्नं तदुपलक्षणतया सर्वमङ्गलदातृ च यथोक्तं ब्रह्माण्डपुराणे तन्नामाष्टोत्तरशतप्रसङ्गे "सहस्रनाम्नां पुण्यानां त्रिरावृत्त्यातु यत् फलम् । एकावृत्त्यातु कृष्णस्य नामैकं तत् प्रयच्छतीति तत्रापि विशेषः श्रुतं किमुत गदितमित्यर्थः किञ्च यत्कृतो येनैव दिष्टो गोत्रधर्मः गां पृथ्वीमपि त्रायते स चासौ धर्मश्च अपि चेत् सुदुराचार इत्यादि श्रीगीतादिभ्यः । यद्वा गोत्रस्य श्रीगोवर्द्धनस्य धर्म्मः मखरूपो येनैव कृतः भक्तवात्सल्यं दर्शयता ते महेन्द्रमपि तुच्छीकृत्य प्रकाशितः यद्वा गावस्त्रायन्त इति गोत्राः श्रीगोपाः तेषां धर्म्मः स्वभावः असमोर्ध्वप्रेमा येन यत्र वा कृत इतिदिक् ॥ ४७ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

जगद्गुरुत्वं प्रपञ्चयति—तीर्थं चक्र इत्यादि । हे नृप ! परीक्षित् यदुषु यादवमध्ये श्रीकृष्णलीलारूपं तीर्थं यदजनि जातं तत् स्वःसरिदेव यत् पादशौचं पादोदकं तत् ऊनं चक्रे अस्य श्रवणमात्रेणैव सद्य एव निःश्रेयसप्राप्तेः गङ्गायास्तु दर्शनस्पर्शनाद्यवगाहनैरेव तत्रापि चिरेणैव तथोक्तं स्वर्धुन्यापोनुसेवयेति किञ्च यस्य श्रीकृष्णस्य विद्विट्स्निग्धाः विद्विषश्च स्निग्धाश्च स्वरूपं ययुः विद्विषः स्वरूपं मोक्षं स्निग्धाः स्वेषां पार्षदानां रूपं यस्य श्रीर्विभूतिः अजितपरा अजिता अन्यैरनभिभूता अत एव परा उत्कृष्टा पश्चात् कर्मधारयः यदर्थं यस्याः श्रियोर्थं अन्येषां ब्रह्मादीनां यत्नः अथवा श्रीमहालक्ष्मीः अजिता सती अबाधिता सती परा परायणा यस्य यत् यस्य नाम अमङ्गलघ्नं संसारबन्धहरं श्रुतं वा गदितं वेत्यर्थः । यत् येन गोत्रधर्मः कृतः गां पृथिवीं त्रायतीति त्रोत्रः सचासौ धर्मश्चेति तथा एतत् क्षितिभरहरणं श्रीकृष्णस्य न चित्रं कुत इत्याह—कालचक्रायुधस्य कालचक्रं सुदर्शनमेवास्त्रं यस्य ॥ ४७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं लीलायामुपपादितायां भारतवत् भूभारहरणं विशेषाकारेण न निरूपितमिति शङ्कां व्यावर्त्तयितुं कैमुतिकन्यायनिरूपणाय भगवतो नानाविधानि माहात्म्यानि निरूपयति तीर्थं चक्रे नृपोनमिति । किं भगवतो माहात्म्यं वक्तव्यं यत्किञ्चिद्यदुषु अजनि चरित्रं गुणाः पुरुषाः भगवत्सम्बन्धि यत्किञ्चित् तत्सर्वमेव प्रत्येकं तीर्थमूनं चक्रे तत्कि तीर्थमित्याकाङ्क्षायामाह स्वस्सरिदिति, गङ्गेत्यर्थः यदुकुलावतीर्णं भगवत्सम्बन्धि यत्सर्वमेव प्रत्येकं पदार्थमात्रमपि गङ्गातोप्युत्तममित्यर्थः । एतस्य तथात्वं भगवतैव कृतमिति ज्ञापयति चक्र इति स्वयं तस्य चरित्रस्य तथा माहात्म्यं दत्तवानित्यर्थः ननु, तथापि ये युक्त्यैव पदार्थानङ्गीकुर्वन्ति तेषामत्र कथं बुद्धिर्भविष्यति इत्याशङ्क्याह स्वःसरिदपि पादशौचमिति प्राणिनः सर्वसम्बन्धिपदार्थापेक्षया पादशौचमपकृष्टं तत्पुरुषः पुनर्न स्पृशति स्वःसरिदिति भूमिष्ठायाः पातालस्थायाश्च तत्रत्यदोषसम्बन्धात् कदाचिद्दोषोपि भवेत् इति एवमेकं माहात्म्यं निरूपितं सामान्यरूपं जडसाधारणं जीवेषु विशेषमाह विद्विट् स्निग्धाः स्वरूपं ययुरिति द्वेषरागयोरपि मोक्ष-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

साधकत्वं जातमित्यर्थः। तस्मात् कृष्णावतारे यः कश्चन धर्मः मोक्षं दास्यतीति निरूपितं भगवतः सकाशादैहिकसिद्धौ हेतुमाह—अजितपरा श्रीरिति। लक्ष्मीर्भगवत्परा अतः स्वामी सेवकेभ्य एव दास्यति नान्येभ्य इति अनायासेनाप्यैहिक-सिद्धिः इदं तृतीयमाहात्म्यं परम्पराप्रकारेण गतं प्रसङ्गात् भगवत्सम्बन्धिन्या लक्ष्म्या माहात्म्यमाह—येनान्येषु माहात्म्यं निराकृतं भवति यदर्थे अन्ययत्न इति यस्याः लक्ष्म्याः सम्बन्ध्यर्थे अर्थरूपे पुरुषार्थे अन्येषां महान् यत्न एव प्राप्तिस्तु सान्दिग्धेत्यर्थः। यत्रार्थ एव पुरुषार्थो हीनोऽप्येषां सान्दिग्धः तत्र धर्मादिषु का वार्त्ता इत्युक्तम् एवं भगवत्सम्बन्धिपदार्थमात्रस्य जीवानां शक्तेश्च माहात्म्यं निरूप्य नाम्नो माहात्म्यमाह—यन्ना-मामङ्गलघ्नमिति। यस्य नाम अमङ्गलं नाशयति सम्बन्धमात्र-मपेक्ष्यते इति वक्तुं श्रुतमिति गदितं तु ततोऽपि भिन्न-प्रकारेण हेतुसहितमपि अमङ्गलं नाशयतीत्यर्थः। ननु ऋषि परम्परागतस्य धर्मस्य माहात्म्यं भविष्यतीत्याशङ्क्याह—येनैव भगवता कृत ऋषिपरम्परासु वर्त्तमानो धर्मः एवं षड्विध-माहात्म्यम् उक्तं यस्यैतावन्माहात्म्यं तस्य एतद्भूभारहरण-लक्षणं तदर्जुनादिभिः कृतं तच्चित्रं न भवति जीवधर्मत्वात् ननु कश्चिद्धर्मः सेवकैरेव कर्त्तुं शक्यते न प्रभुणेति भूभार-हरणलक्षणं भगवतः अशक्यमेव कुतो न भवतीत्याशंक्याह कालचक्रायुधस्येति। कालरूपं चक्रमायुधं यस्येति कालसहस्रां-शेनापि भूभारो हर्त्तुं शक्यः तत्र पूर्णः कालः भग-वतः सुदर्शनमेकं आयुधमिति कः सन्देहो भूभार-हरणेऽपि॥ ४७॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

श्रीकृष्णनित्यलीलारत्नाकरं श्रीदशमस्कन्धमुपसंहरन् श्री-कृष्णस्यान्यावतारवैलक्षण्यपञ्चकमाह—तीर्थमिति। यत् यदुषु अजनि जातं तीर्थं कृष्णकीर्त्तिरूपं तत् कर्त्तृ स्वःसरिद्रूपं पादशौचं तीर्थं ऊनं चक्रे इतः पूर्वं गङ्गैव सर्वतीर्थाधिका आसीत् अतः परन्तु कृष्णकीर्त्तिरेव ततोऽप्यधिका अभूदिति भावः इदमेकं चित्रं तथा यत् यस्य विद्विषः कंसादयः स्निग्धा गोप्यादयश्च स्वरूपं क्रमेण सायुज्यं प्रापुः तदीयश्री-विग्रहञ्च सम्भोक्तुं प्रापुः इदं द्वितीयं चित्रं यदर्थे यस्याः कृपालवप्राप्त्यर्थं अन्येषां ब्रह्मादीनां परिचारकाणां यत्नः सा श्रीरजितं जयामासस्तत्परैव अभूत् बहुतपोभिरपि व्रजस्त्री-श्रेणिरिव यत् यञ्जेतुं वशीकृत्य रासादिभिः रमयितुं न शशा-केत्यर्थः इदं तृतीयं चित्रं यत् यस्य नाम कृष्णेति द्व्यक्षरं नारायणादिनिखिलतदंशनामोत्कृष्टं अमङ्गलमविद्यापर्य्यन्तं हन्तीति तत् सुकप्रग्रहया वृत्त्या मङ्गलः सर्वोत्कर्षे अम ङ्गलं तदभावः तं हन्तीति तत् श्रुतम् अविशेषेण सर्व-साधनफलोत्कर्षेण मथ्नातीति स्वीयसर्वोत्कर्षेण विलो-डयति श्रुतमथगदितं यस्य तत् नारायणादिनिखिलतदंश-नामोत्कृष्टमित्यर्थः। सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत् फलं। एकावृत्त्यैव कृष्णस्य नामैकं तत् प्रयच्छतीति ब्रह्माण्डपुरा-णोक्तेः इदं चतुर्थं चित्रं गां सर्वामपि पृथ्वीं त्रायते चतुर्भि-रेव पादैर्निरन्तरं सर्वत्रैवाभिद्रुत्य वा पालयतीति सचासौ धर्म-श्चेति स तादृशो येनैव कृतः द्वापरान्ते त्रिपादहीनोऽपि धर्मो येन चतुष्पादेव कृत इत्यर्थः चतुर्भिर्वर्त्तसे येन पादैर्लोकसुखाव-हैरिति पृथिव्युक्तेः इदं पञ्चमं चित्रं विस्मयावहं वैलक्षण्यं तस्य कृष्णस्य तत्क्षितिभरहरणन्तु न चित्रं येनैव लोका-विस्मिता भवन्तीति भावः॥ ४७॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

निरतिशयाद्भुतकीर्त्यादिभिः सर्वश्रेष्ठस्य श्रीकृष्णस्य क्षिति-भरहरणं कियदित्याह—तीर्थमिति। हे नृप! यत् अजनि जातं कीर्तिरूपं तीर्थं तत् स्वःसरिद्रूपं पादशौचं तीर्थं श्रेष्ठतया विख्यातमप्यूनमल्पं चक्रे स्वकीर्तिरूपं तीर्थमेव सर्वतीर्थोपरि विराजत इति भावः। विद्विषतः प्रातिकूल्येन स्मरन्तः स्निग्धाः आनुकूल्येन स्मरन्तः यस्य स्वरूपं ययुः अजितः यस्य स्वरूपं ययुः अजितः स एव परः आश्रयो यस्याः शक्तिभूतायाः सा यदर्थे यदवलोकनार्थं अन्येषां यत्नः तपोव्रतादिश्रमः सा श्रीः यस्यैव श्रेष्ठा शक्तिरित्यर्थः। यस्य श्रुतमथवा गदितं नाम अमङ्गलघ्नम् यत् येन गोत्रेषु तत्तदृषिवंशेषु धर्मः कृतः प्रव-र्तितः कालः सर्वसंहारकः शक्तिरूपः चक्रं सुदर्शनाख्यपार्षदः ते आयुधे यस्य तस्य सर्वेश्वरस्य श्रीकृष्णस्य भूभर-हरणं अतिदुष्करतया वर्णितमपि न चित्रं नाद्भु-तम्॥ ४७॥

---

### भाषाटीका।

हे नृप इहां से पहलें गंगा हि तीर्थ रहा और इस समय में तौ यादवन में जो जन्म लिया श्रीकृष्ण कीर्त्ति रूप तीर्थ ने निज चरण का प्रक्षालन रूप गंगा तीर्थ न्यून कर दिया अर्थात् श्रीकृष्ण कीर्त्ति हि सर्व तीर्थोपरि विराजती हैं यह एक आश्चर्य्य है तैसें हि श्रीकृष्ण परम करुणा-वान् है इसी से शत्रुजन भी भक्त होकर श्रीकृष्ण के सायुज्य मोक्ष को प्राप्त हो गए यह द्वितीय आश्चर्य तथा जिस लक्ष्मी के कृपा कटाक्ष को अर्थ ब्रह्मादिकन का तप आदि करने में महान् यत्न है वह लक्ष्मी भी श्रीकृष्ण की सेवा में परायण होकर उस के आधीन हो रही है यह तीसरा आश्चर्य्य तथा श्रवण कियो गयो अथवा उच्चारण कियो गयो जिस का नाम सब अमङ्गलन का नाश करने बारा है यह चौथा आश्चर्य्य है तथा ऋषियों के वंश में धर्म की प्रवृत्ति जिसने करी है अथवा पृथिवी को रक्षा करने बारा धर्म जिस जिस ने प्रवृत्त किया है यह पांचवा आश्चर्य है सर्व का संहार करने वारे काल का अधिष्ठाता सुदर्शन चक्र जिस का आयुध है उस श्रीकृष्ण को पृथिवी का भार हरण करना यह कुछ आश्चर्य नहि है॥ ४७॥

जयति जननिवासो देवकीजन्मवादो—
यदुवरपर्षत्स्वैर्दोर्भिरस्यन्नधर्मम् ।
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन—
व्रजपुरवनितानां वर्धयन् कामदेवम् ॥ ४८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यत एवम्भूतः श्रीकृष्णस्ततः स एव सर्वोत्तम इत्याह—जयतीति । जनानां जीवानां यो निवासः आश्रयस्तेषु वा निवसत्यन्तर्यामितया तथा स कृष्णो जयति देवक्यां जन्मेति वादमात्रं यस्य सः। वस्तुतः अजन्मा यदुवराः पर्षत्सभा सेवकरूपा यस्य इच्छामात्रेण निरसनसमर्थोऽपि क्रीडार्थं दोर्भिरधर्ममस्यन् क्षिपन् स्थिरचरवृजिनघ्नोऽधिकारी विशेषानपेक्षमेव वृन्दावनगततरुतृणलतादीनां, संसारदुःखहन्ता तथा विलासवैदग्ध्यानपेक्षं व्रजवनितानां पुरवनितानाञ्च सुस्मितेन शोभनहास्ययुतेन श्रीमता मुखेनैव कामदेवं वर्धयन् कामश्चासौ दीव्यति विजिगीषति संसारमिति देवस्तम् भोगद्वारा मोक्षप्रदमित्यर्थः ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं तस्य सर्वोत्कृष्टत्वं श्रुत्वा सुखं प्राप्नुवतोपि श्रोतॄंस्तदवस्थत्वमतीतमिवाशङ्क्य म्लायतः स्वानुभवेन सान्त्वयन्नाह—जयतीति । देवक्यां जन्म जननलीलानुकरणेन प्रादुर्भावो वादस्तत्त्वबुभुत्सुकथा नतु छलजात्यादिरूपा यस्य यद्वा देवक्यां जन्मनो वादः ख्यातिर्नन्दस्त्वात्मज उत्पन्न इत्यत्र व्याख्यातरीत्यातु श्रीयशोदायामपि तर्क्यं जन्म यस्येत्यर्थः। स प्रसिद्धः श्रीकृष्णो जयति सर्वदेवस्वरूपरूपगुणलीलापरिकरस्थानगतेन सर्वोत्कर्षेण विराजते अत्र च लोडर्थत्वं न सम्भवति सदोत्कृष्टता परकाष्ठामहिष्ठे श्रीभगवति तद्विज्ञानां तादृशानामाशीर्वादायोगात् यदि वा तद्योगः कथञ्चित्कल्प्यस्तथाप्याशीर्वादविषयस्य सविशेषणस्य तस्य तदपि तथैवावस्थितिप्राप्तेर्विवक्षितार्थ एव लभ्येत धार्मिकसभ्यादिसम्पन्नो विष्णुमित्रो वर्द्धतामितिवत् अथ कथम्भूतः सन् जयतीत्यपेक्षायां विशेषणानि वदन् परिकरविशिष्टतयाह—तेन च तादृशतन्नित्यजये विद्वत्प्रत्यक्षलक्षणं प्रमाणमप्याह, जनेषु सालोकयेत्यादिपद्ये जना इतिवत् तदीयेष्वन्तरङ्गेषु श्रीयादवगोपादिषु साक्षान्निवासोऽन्येषु च तत्स्फूर्त्तिरूपो यस्य सः तत्र चान्यार्थतां परिहरंस्तस्मिन् जये विभूत्यैव तैर्जनैः विशिष्टतामाह, यदुवरेत्यादिना तत्रान्तरङ्गैर्विशिनष्टि यदुवराः क्षत्रिया गोपाश्च परिषत् सभारूपा यस्य सः बहिरङ्गैश्च विशिनष्टि स्वे भक्तजना एव दोषो भुजा इव भुजास्तैरधर्ममेतादृशार्थं नास्तिक्यादिकं जगति चास्यन् दूरीकुर्वन् अतस्तत्तत्सम्बन्धेन स्थिरचराणामन्तरङ्गाणां स्ववियोगदुःखहन्ता बहिरङ्गाणां संसारहन्तापि सन् अथ तत्रापि परमान्तरङ्गैर्विशिनष्टि सुस्मितेति । शोभनं स्मितं तदुपलक्षितप्रसादविलासादिकं यत्र तेन स्वभावत एव श्रीयुक्तेन च मुखेनैव प्राधान्यतः प्रथमोक्तानां व्रजवनितानां, तदनन्तराणां पुरवनितानां जनितात्यर्थानुरागाणां तासां योषितां यः कामः स एव दीव्यति परमप्रेमरूपत्वात् सर्वतोपि विराजतीति देवः तं वर्द्धयन् सदैवोद्दीपयन् इति स्वरूपगुणलीलास्थानविशिष्टतापि दर्शिता तदेवं सर्वस्यापि विशेषणस्य विधेयेन जयत्यर्थेनानुगतत्वात्तादृशोऽसौ स्वयमेव तादृशैः परिकरैः सह तादृशविलासादिविशिष्टो व्रजे पुरद्वये च सदा सर्वोत्कर्षेण विराजत एवेति स्थितं युक्तमेव च तत् स्वयं भगवत्त्वात् आगन्तुकतादृशत्वे स्वयं भगवत्त्वहानेः तस्मादविचारेणैवास्य कानिचिद्वचनानि प्रतिकूलायन्ते वस्तुतस्तु अनुकूलान्येव तत्र दशमस्कन्धस्य तत्रतत्र व्याख्यातान्येव तत्स्वरूपानित्यत्वे प्रथमस्कन्धस्य ययाहरद्भुवोभारमित्यादिद्वयन्तु यथा तनुरूपकलेवरशब्दा भाववाचिन एव यथा तृतीयस्कन्धे विसर्गप्रसङ्गे ब्रह्मणि तत्पर्यायशब्दस्य एवार्थः स्वीकृतः अनुपपत्तेः तत्र यदि सा तर्हि कथं स्वयं भगवति न स्यात् सच भावोऽत्र भूभारजिहीर्षालक्षणः मायाकार्यसम्बन्धित्वात्तदाभास एव च ततः साम्ये कण्टकदृष्टान्तत्वं सुसङ्गतमेव नटदृष्टान्तत्वञ्च अन्यरूपकाभिनेतुर्नटस्य स्वरूपवेषाभ्यामेव स्थितस्य तत्तद्भावाभासस्वीकारपरित्यागमात्राभ्यामिति एव मन्यत्राप्याकृतिदेहशब्दौ व्याख्येयौ अथवा त्यागस्वीकारौ नामान्तर्धापनाविर्भावने एव यथा श्रीमध्वाचार्यधृतं तन्त्रभागवतवचनं पूर्वमुदाहृतं—

> अहेयमनुपादेयं तद्रूपं नित्यमव्ययम् ।
> स एवापेक्ष्यरूपाणां व्यक्तिमेव जनार्दनः ॥
> अगृह्णाद्व्यसृजच्चेति कृष्णरामादिकां तनुम् ।
> पठ्यते भगवानीशो मूढबुद्धिव्यपेक्षया ॥ इति

एवं प्रथमस्य द्वादशे विधूयेत्यादि पद्ये स्वामिभिरप्युक्तं यत्रदृष्टस्तत्रैवान्तर्हितः नत्वन्यत्र गतः यतो विभुः सर्वगत इति अत एव तृतीये—

> प्रदर्श्यातप्ततपसामवितृप्तदृशाम् नृणाम् ।
> आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनम् ॥

इत्यत्रापि लोकलोचनरूपं स्वबिम्बं निजमूर्त्तिं प्रदर्श्य पुनरादायैव चान्तरदधात् नतु त्यक्त्वेत्युक्तं यथा मत्स्यादिरूपाणीत्यनन्तरमपि तथोक्तं यदा मुकुन्दो भगवानिमां महीं जहौ स्वतन्वेति त्यागोऽत्र स्वतनुकरणक इति सर्वान्ते तल्लोकगमनञ्च सर्वाश्चर्यमाकृष्यावतीर्णस्य तस्य तत्तद्दर्शनेन तथैकादशस्कन्धस्य लोकाभिराममित्यादिकं सयुक्तिकं टीकाकृद्भिरेव व्याख्यातं अथात्रानुकूलवचनानि तत्र सर्वावतारगतानि यथा

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

नृसिंहपुराणे "युगे युगे विष्णुरनादिमूर्त्तिमास्थाय विश्वं परिपाति दुष्टहा" इति अत एव तत्तदाराधनं शास्त्रञ्च मिथ्या न स्यात् तत एव च जलेषु मां रक्षतु मत्स्यमूर्त्तिरित्यादि श्रीनारायणवर्मादौ तथा नित्यत्व एव शालग्रामशिलादिषु नरसिंहत्वादिभेदः सङ्गच्छते तत्तत्साविध्यादेव हि तत्तद्भेदः श्रूयते चैवं नवस्वपि वर्षेषु साक्षात्तत्तदुपासनादि यथोक्तं नवस्वपि वर्षेषु भगवान्नारायणो महापुरुषः पुरुषाणां तदनुग्रहायात्मतत्त्वव्यूहेनात्मनाद्यापि सन्निधीयत इति श्रीप्रद्युम्नादीनां गतिविलासादिकञ्च तत्र तत्र वर्णितं तत्र श्रीप्रद्युम्नस्य ताव दृश्यते अतीव सुललितगतिविलासरुचिरहासावलोकलीलये- त्यादि रमां रमयन्नित्यादि च अत एवोक्तं तत्र तत्र सङ्कर्षणसंज्ञामात्मसमाधिरूपेण सन्निधाप्येति ब्राह्मपाद्मोत्तरखण्डादौ श्रीमत्स्यदेवादीनां वैकुण्ठे पृथक्पृथक् लोकाश्च श्रूयन्ते तथा मध्वभाष्यप्रमाणिता श्रुतिश्च वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नृसिंहो वामनो रामो रामः कृष्णो बुद्धः कल्किरहं शतधाहं सहस्रधाहं अमितोहमनन्तोहं नैवैते जायन्ते नैतेषामज्ञानबन्धो न मुक्तिः सर्व एव ह्येते पूर्णा अजरा अमृताः परमाः परमानन्दा इति अथ विशेषतः श्रीकृष्णगतानि यथा तत्रैकादशान्ते धारणा ध्यानमङ्गलमित्यत्र च श्रीस्वामिभिर्व्याख्यातं धारणाया ध्यानस्य च मङ्गलं शोभनं विषयम् इतरथा तयोर्निर्विषयत्वं दृश्यते चाद्याप्युपासकानां साक्षात्कारस्तत्फलप्राप्तिश्चेति तथा च त्रैलोक्यसम्मोहनतन्त्रे श्रीमदष्टादशाक्षरप्रसङ्गे—

> अहर्निशं जपेद्यस्तु मन्त्री नियतमानसः।
> स पश्यति न सन्देहो गोपवेषधरं हरिम्॥ इति

एवं गौतमीये च सदाचारप्रसङ्गे——

> अहर्निशं जपेन्मन्त्रं मन्त्री नियतमानसः।
> स पश्यति न सन्देहो गोपरूपधरं हरिम्॥ इति

वृन्दावने वसेद्धीमान् यावत्कृष्णस्य दर्शनमिति च। तथाच श्रीकृष्णसहस्रनामप्रारम्भे—

> तस्य हृष्टाशयः स्तुत्या वृष्णिगोपाङ्गनावृतः।
> तापिञ्छश्यामलं रूपं पिञ्छोत्तंसमदर्शयत्॥ इति

अग्रे च तद्वाक्यम्—

> मामवेहि महाभाग कृष्णं कृत्यविदां वर।
> पुरस्कृतोसि त्वद्भक्त्या पूर्णास्ते स्युर्मनोरथाः॥ इति

तथा पाद्मनिर्माणखण्डे "पश्य त्वं दर्शयिष्यामि स्वरूपं वेदगोपितम्" इति श्रीभगवद्वाक्यानन्तरं ब्रह्मवाक्यम्—

> ततोऽपश्यमहं भूप बालं कालाम्बुदप्रभम्।
> गोपकन्यावृतं गोपं हसन्तं गोपबालकैः॥
>
> कदम्बमूल आसीनं पीतवाससमद्भुतम्।
> वनं वृन्दावनं नाम नवपल्लवमण्डितम्॥ इत्यादि

श्रीगोपालतापनीचैवं "तदुहोवाच ब्राह्मणोऽसावनवरतं मेध्यातः स्तुतः परार्द्धान्ते सोऽबुध्यत गोपवेषो मे पुरस्तादाविर्बभूव" इति सिद्धनिर्देशमपि श्रूयते बृहन्नारदीयमङ्गलाचरणे



वन्दे वृन्दावनासीनमिन्दिरानन्दमन्दिरम्॥ इति स्कान्दद्वारकामाहात्म्ये श्रीबलिं प्रति प्रह्लादवाक्ये—

> गृहे सन्तिष्ठते यस्य माहात्म्यं दैत्यनायक।
> द्वारकायाः समुद्भूतं सान्निध्यं केशवस्य च।
> रुक्मिणीसहितः कृष्णो नित्यं निवसते गृहे॥ इति

पाद्मकार्त्तिकमाहात्म्ये तत्प्रातः स्नानार्घमन्त्रे—

> व्रतिनः कार्त्तिके मासि स्नातस्य विधिवन्मम।
> गृहाणार्घ्यं मया दत्तं राधया सहितो हरे॥ इति

एवं नानामन्त्रा अपि तथैव तं साक्षान्निर्दिशन्ति अत एव गोपालतापन्यां गोविन्दं सच्चिदानन्दविग्रहं वृन्दावनसुरभूरुहतलासीनं सततं समरुद्गणोहं परया स्तुत्या तोषयामीति तदेवमभिप्रेत्य श्रीशुकदेवोपि निजाभीष्टदैवतत्वेनाह—पतिर्गतिश्चान्धकवृष्णिसात्वतां प्रसीदतां मे भगवान् सतांपतिरिति प्रीयान्न इन्द्रो गवामिति च श्रीमन्नराकृतिमेवाधिकृत्य नारायणवर्मण्यप्याह "मां केशवो गदया प्रातरव्याद्गोविन्द आसङ्गव आत्तवेणुः" इति एवं श्रीमन्नराकारे वा येषां या भ्रान्तिः सा तेषामपि निरस्ता यथोक्तम्—

> यत्पादपांसुर्बहुजन्मकृच्छ्रतो धृतात्मभिर्योगिभिरप्यलभ्यः।
> स एव यद्दृग्विषयः स्वयं स्थितः किं वर्ण्यते दिष्टमहो व्रजौकसाम्॥

एवं न चान्तर्न बहिर्यस्येत्यादि नौमीड्यते इत्यादि सकृद्यदङ्गप्रतिमेत्यादि अहोभाग्यमहोभाग्यमित्यादि च एवमेव ब्रह्माण्डे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रे श्रीमन्नराकृतित्वमेवाधिकृत्य—

> "नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः।
> नवनीतविलिप्ताङ्गो नवनीतनटोऽनघः॥ इति

श्रीगोपालतापन्यामपि "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् तं पीठगं येतु यजन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्" इति विशेषश्लोकः गोप्यस्तपः किमचरन् यदमुष्येत्यादौ तथाच पाद्मनिर्माणखण्डे श्रीवेदव्यासवाक्यम्—

> दृष्ट्वातिहृष्टोह्यभवं सर्वभूषणभूषणम्।
> गोपालमबलासङ्गमुदितं वेणुवादिनम्॥
>
> ततो मामाह भगवान् वृन्दावनचरः स्वयम्।
> यदिदं मे त्वया दृष्टं रूपं दिव्यं सनातनम्॥
>
> निष्कलं निष्क्रियं शान्तं सच्चिदानन्दविग्रहम्।
> पूर्णपद्मपलाशाक्षं नातः परतरं मम॥
> इदमेव वदन्त्येते वेदाः कारणकारणम्।

इत्यादि। अथ तस्य मानसानां शारीराणाञ्च गुणानां स्वाभाविकत्वमव्यभिचारित्वञ्चोक्तं प्रथमे सत्यं शौचं दया क्षान्तिरित्यादिना—

> एते चान्ये च भगवन्नित्या यत्र महागुणाः।
> प्रार्थ्या महत्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित्॥

इत्यन्तेन अथ तत्तत्परिकरनित्यत्वे प्रतिकूलायमानानि यथार्थं व्याख्यायन्ते तत्र देवावतरणवाक्यमेकदेशप्रस्तावमयमिति पूर्वपूर्वादाहृतमास्ति मौषलादिकञ्च ब्रह्मशापमर्यादारक्षार्थं मायिकमेव आह स्म च तदानीमेव दारुकं इति

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी॥

श्रीभगवान्—

त्वन्तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः ।
मन्मायारचितामेतां विज्ञायोपशमं व्रज" इति ॥

अस्यार्थः त्वन्तु दारुको ज्ञाननिष्ठो मदीयलीलातत्त्वज्ञः मद्धर्मं मम स्वभक्तपालयितृत्वरूपं स्वतुल्यपरिकरसङ्गित्वरूपञ्च स्वभावं आस्थाय विश्रभ्य एतामधुना प्रकाशितां सर्वामेव मौषलादिलीलां मम माययैवेन्द्रजालवद्दर्शितां विज्ञाय उपेक्षको वहिर्दृष्ट्या जातं शोकमुपेक्षमाणः उपशमं चित्तक्षोभाभावमुपि व्रजेति अत्र दारुकस्य स्वयमेव तल्लोकादवतीर्णत्वेन सिद्धत्वादेतामित्यत्रातिसन्निहितार्थलाभाच्चान्यथा व्याख्यानमेव प्रथमप्रतीत्याविषय इति विवेकव्यं तथा चैकादशान्ते पद्यत्रयं तत्र प्रथमं यथा—

राजन् परस्य तनुभृज्जननाप्ययेहा
मायाविडम्बनमवेहि यथा नटस्य ॥
सृष्ट्वात्मनेदमनुविश्य विहृत्य चान्ते
संहृत्य चात्ममहिम्नोपरतः स आस्ते ॥ इति

अस्यार्थः परस्य श्रीकृष्णस्य तनुभृतः पार्षदा यादवादयस्तेषां जननाप्ययरूपा ईहाश्चेष्टाः केवलं परस्यैव मायया विडम्बनमनुकरणमेवावेहि यथेन्द्रजालविद्याविदो नटः कश्चित् जीवत एव मारयित्वेव पुनश्च तद्देहं जनयित्वेव दर्शयति तस्यैव विश्वसर्गादिहेत्वचिन्त्यशक्तेस्तस्य तादृशशक्तित्वं न च चित्रमित्याह सृष्ट्वेति एवमेव दृश्यते चाद्याप्युपासकानामित्यादि तद्व्याख्याने सुसङ्गच्छते तत्तत्परिकरेणैव सार्द्धं तेषु तत्साक्षात्कार इति एवं सति श्रीसङ्कर्षणादौ मुग्धानामन्यथा हेतूदाहरणाभासः सुतरामेव मायिकः स्कान्दायोध्याखण्डे श्रीलक्ष्मणस्यापि तादृशत्वं न सम्प्रतिपन्नं तथाहि तदन्तिमदशानुकरणलीलायां—

ततः शेषात्मतां जातं लक्ष्मणं सत्यसङ्गरम् ।
उवाच मधुरं शक्रः सर्वस्य च सपश्यतः ॥
इन्द्र उवाच ।
लक्ष्मणोत्तिष्ठ शीघ्रं त्वमारोहस्व पदं स्वकम् ।
देवकार्यं कृतं वीर त्वया रिपुनिषूदन ॥
वैष्णवं परमं स्थानं प्राप्नुहि त्वं सनातनम् ।
भवन्मूर्त्तिः समायाता शेषोपि विलसत्फणः ॥

इत्यादि । ततश्च—

इत्युक्त्वा सुरराजेन्द्रो लक्ष्मणं सुरसङ्गतः ।
शेषं प्रस्थाप्य पाताले भूभारधरणक्षमम् ॥
लक्ष्मणं यानमारोप्य प्रतस्थे दिवमादरात् ॥ इति

अत एव जरासन्धवाक्ये तव यदि श्रद्धेत्यत्र श्रीस्वामिभिरपीत्थं वास्तवार्थो व्यञ्जितः अच्छेद्यदेहोसाविति स्वयमेव मत्वा अपरितोषात्पक्षान्तरमाह यद्वा मां जहीति अथ द्वितीयं यथा अप्राकृतानां तेषां तत्र सम्भवतीत्यास्तां श्रीकृष्णपाल्यत्वेनैव सम्भवतीत्याह—मर्त्येन यो गुरुसुतं यमलोकनीतं त्वाञ्चानयच्छरणदः परमास्त्रदग्धं जिग्येन्तकान्तकमपीशमसावनीशः किं स्वावने स्वरनयन्मृगयुं सदेहमिति अस्यार्थः यः श्रीकृष्णः यमलोकं गतमपि गुरुसुतं गुरोर्जातेन पञ्चजनभक्षितेन तेन मर्त्येन देहेनैवानयत् तच्च ब्रह्मतेजसो बलवत्त्वं मन्तव्यं त्वाञ्च परमास्त्रदग्धं ब्रह्मास्त्रेण दग्धुमारब्धं यस्तस्माद्ब्रह्मास्त्रादानयत् रक्षितवानित्यर्थः किमन्यद्वक्तव्यं यश्चान्तकानामन्तकमीशं श्रीरुद्रमपि बाणसङ्ग्रामे जितवान् अहो यश्च तं जराख्यं मृगयुमपि स्ववैकुण्ठविशेषं सशरीरमेव प्रापितवान् स कथं स्वानां यदूनां अवने ईशो न भवति तस्मात्ते स्वप्नवदर्शनं न तात्त्विकलीलानुगतं सशरीरन्तु तेषां स्वलोकगमनमतीव युक्तमित्यर्थः अथ तृतीयं यथा ननु गच्छन्तु तादृशशरीरा एव स्वं धाम तत्रापि स्वयं भगवान् विराजत एवेति न तेषां तद्विरहदुःखमपि श्रीभगवांस्तु तथा सामर्थ्यश्चेत्तर्हि कथमन्यांस्तादृशान्निर्माय तैः सह मर्त्यलोकानुग्रहार्थमपरमपि कियन्तं कालं मर्त्यलोकेपि प्रकटो नासीत् इत्यत्र सिद्धान्तयन् तेषां श्रीभगवतश्च सौहार्दभरेणापि परस्परमव्यभिचारित्वमाह

तथाप्यशेषस्थितिसम्भवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् ।
नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्थगतिं प्रदर्शयन् ॥

इति अस्यार्थः यद्यप्युक्तप्रकारेणाशेषस्थितिसम्भवाप्ययेषु अनन्यहेतुः यद्यस्मात्तद्रूपमप्यनन्ततादृशशक्तिधृक् तथापि यादवानन्तर्धाप्य निजं वपुः अत्र शेषितं प्रणेतुं किञ्चित्कालं स्थापयितुं नैच्छत् किन्तु स्वमेव लोकमनयत् तत्र हेतुः तान् विना मर्त्येन लोकेन किं मम प्रयोजनमिति स्वःस्थानां तद्धामगतानां तेषां गतिमेव स्वस्याभिरुचितत्वेन प्रकृष्टां दर्शयन्निति अतस्तेषां श्रीभगवद्वदन्तर्धानमेव न त्वदन्यदस्तीति श्रीभगवदभिप्रायकथनेनापि श्रीमानुद्धव आह—तृतीये—

मिथो यदैषां भविता विवादो मध्वासवाताम्रविलोचनानाम् ।
नैषां वधोपाय इयानतोन्यो मय्युद्यतेऽन्तर्दधते स्वयं स्म ॥

इति अस्यार्थः एषां यदूनां यदा मिथो विवादस्तदाप्येषां पृथिवीपरित्याजने वधरूप उपायो न विद्यते किमुतान्येन विवादेन स न स्यादिति तर्हि तेषां मयाभिलषिते पृथ्वीपरित्याजने कतम उपायो भवेत् तत्र पुनः परामृशति अतो वधादन्य एव इयानेतावानेवोपायो वर्त्तते कोसौ मयि उद्यते ममेच्छया एते स्वयमन्तर्दधत इति यः स्मेति निश्चये तत कूर्मपुराणोक्तश्रीसीताहरणवत् पुरस्त्रीहरणमपि मायिकं ज्ञेयं तथैवासां विवाहप्रसङ्गे स्वरूपशक्तित्वं प्रमाणितं किञ्च तेषु यच्चान्यच्छस्त्राघातमूर्च्छातत्त्वबुभुत्सादिकं श्रूयते तद्भवेवत इव नरलीलौपयिकतया प्रपञ्चितमिति कचित्तु प्रकटलीलायाः प्रापञ्चिकामिश्रत्वाद्यथार्थमेव च तत्तत् यथा शतधन्ववधादौ अन्तरङ्गाणां तु भगवत्साधारण्यमेव तन्नित्यपरिकरत्वेन दर्शितत्वाद्युक्तं तदनुकूलानि चैतानि वाक्यानि यथा पाद्मकार्त्तिकमाहात्म्ये श्रीसत्यभामां प्रति श्रीभगवद्वाक्यम्—

एते हि यादवाः सर्वे मद्गणा एव भामिनि ।
सर्वदा मत्प्रिया देवि मत्तुल्यगुणशालिनः ॥ इति

पाद्मोत्तरखण्डे—

यथा सौमित्रिभरतौ यथा सङ्कर्षणादयः ।
तथा तेनैव जायन्ते निजलोकाद्यदृच्छया ॥
पुनस्तेनैव गच्छन्ति तत्पदं शाश्वतम्परम् ।
न कर्मबन्धनं जन्म वैष्णवानाञ्च विद्यते ॥ इति

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीगोपालतापन्यां जन्मजराभ्यां भिन्नः स्थाणुरयमच्छेद्योऽयं योऽसौ सौर्ये तिष्ठति योऽसौ गोषु तिष्ठति योऽसौ गोपान् पालयति योऽसौ गोपेषु तिष्ठतीत्यादिसौर्य्ये इति सौर्य्यां यमुनायास्तीरे श्रीवृन्दावने सहस्रनाम्नि सुयामुन इति हि तद्भाष्ये व्याख्यातम् अथ प्रपञ्चे प्रकटाप्रकटरूपेण प्रकाशभेदेन स्थितानि श्रीवृन्दावनादीन्येव नित्यस्थानानीति च पूर्वोदाहरणजातेन व्यक्तमेवास्ति यथोक्तं पाद्मनिर्माणखण्डे श्रीभगवद्वाक्यम्—

नित्यां मे मथुरां विद्धि वनं वृन्दावनं तथा ।
ममावतारो नित्योऽयमत्र मा संशयं कृथाः ॥ इति

तथाच बृहद्गौतमीये श्रीकृष्ण उवाच—

इदं वृन्दावनं रम्यं मम धामैव केवलम् ।
अत्र ये पशवः पक्षिवृक्षाः कीटा नरामराः ॥
ये वसन्ति ममाधिष्ण्ये मृता यान्ति ममालयम् ।
अत्र या गोपकन्याश्च निवसन्ति ममालये ॥
योगिन्यस्ता मया नित्यं मम सेवापरायणाः ।
पञ्चयोजनमेवास्ति वनं मे देहरूपकम् ॥
कालिन्दीयं सुषुम्णाख्या परमामृतवाहिनी ।
अत्र देवाश्च भूतानि वर्त्तन्ते सूक्ष्मरूपतः ॥
सर्वदेवमयश्चाहं न त्यजामि वनं क्वचित् ।
आविर्भावस्तिरोभावो भवेदत्र युगेयुगे ॥
तेजोमयमिदं रम्यमदृश्यं चर्मचक्षुषा ॥ इति

यथैकादशस्कन्धान्ते—

द्वारकां हरिणा त्यक्तां समुद्रो प्लावयत् क्षणात् ।
वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥
नित्यं सन्निहितस्तत्र भगवान्मधुसूदनः ।
स्मृत्याशेषाशुभहरं सर्वमङ्गलमङ्गलम् ॥ इति

एवमेव विष्णुपुराणे—

प्लावयामास तां शून्यां द्वारकाञ्च महोदधिः ।
यदुदेवगृहन्त्वेकं नाप्लावयत सागरः ॥
नात्यक्रमेत्ततो ब्रह्मंस्तदद्यापि महोदधिः ।
नित्यं सन्निहितस्तत्र भगवान् केशवो यतः ॥

इतिदिक् ॥ ४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तविधासाधारणप्रभावानिर्वाहकं परत्वमाह जयतीति । सर्वोत्कर्षेण वर्तते को जयतीत्यत आह जननिवास इति जनानां स्थावरजङ्गमानां निवासो धारकः जनेषु निवसति धारकतयेत्यर्थः । तर्हि परमात्मनः कथं प्राकृतेषु जन्मेत्यत्राह देवकीति । देवक्यां जन्मेति वादमात्रं यस्य सः तस्य प्राकृतस्येव कर्माधीनं जन्म अपि तु स्वेच्छामूलकं तदिति भावः । तदपि किमर्थमित्यत्राह-यदुवराः यदुश्रेष्ठास्तेषां परिषदः सङ्घास्ताभिरेव दोर्भिर्भुजैरधर्ममस्यन् लक्षणहेत्वोरित्यत्र शता प्रतिक्षेप्तुमित्यर्थः । न केवलं तदेव तस्य सङ्कल्पमात्रेणापि सुशकत्वात् किन्त्वेतदेवावतारकृत्यं मुख्यमित्यभिप्रेत्य विशिनष्टि-स्थिरचरवृजिनघ्नः अधिकारमनपेक्ष्य स्थिराणां वृन्दावनादिगतानां तरुगुल्मादिरूपाणां स्थिराणां चराणां पशुशकुनिप्रभृतीनां केन चित्सम्बन्धेन वृजिनं प्राप्तिप्रतिबन्धकं पापं हन्तीति तथा तदेवोदाहर्तुं विशिनष्टि शोभनं स्मितं यस्मिंस्तेन श्रीमुखेन व्रजवनितानां पुरवनितानां च कामदेवं वर्द्धयन् ताः कामस्वभावाः वनिताः स्वेनैव स्वभावेन स्वविषयकेण मुच्येरन्निति तं तासां वर्द्धयन्निति भावः । वर्द्धयन् जयतीति सम्बन्धः यद्वा अयमपि लक्षणहेत्वोरिति शता वर्द्धयितुं देवकीजन्मवादो जयतीति सम्बन्धः ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जयति जननिवासो देवकीजन्मवादो—
नियमकृतपदाब्जैर्दस्युपीडां स्वदोर्भिः ।
मुदमुभयदृशीनां श्रीनिकेतात्ममूर्त्या—
स्मरवपुरबलानां स्निग्धहासेक्षया च ॥ क ॥

देवकीजन्मवादः देवकीपुत्रत्वेन वादः कीर्तिर्यस्य स तथा स जननिवासः जगन्निवासो जयति कथमत्राह नियमेति भूभारक्षपणार्थं नियमेन भूमौ कृतानि पदाब्जानि पादन्यासपद्मानि यानि तैः स्वदोर्भिश्च दस्युपीडां कुर्वन्निति शेषः । उभयदृशीनां अन्तर्बहिःस्थितरूपस्य दृशि दर्शनं येषां तेषां मुदं कुर्वन् अबलानां स्त्रीणां श्रीनिकेतात्ममूर्त्या लक्ष्मीमन्दिरात्मस्वरूपेण स्निग्धहासेक्षया स्निग्धमन्दस्मितशोभितरूपकटाक्षनिरीक्षणेन च स्मरवपुः काममूर्तिरिव स्थितः ॥ क ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं तस्य सर्वोत्कृष्टत्वं श्रुत्वा सुखं प्राप्नुवतोऽपि श्रोतॄंस्तद्वशत्वमतीतमिवाशङ्क्य म्लायतः स्वानुभवेन सान्त्वयन्नाह जयेति ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अतः स एव जयतीत्याह-जयतीत्यादि । स इत्यध्याहार्यः स श्रीकृष्णो जयति सर्वोत्कर्षेण वर्तते कीदृशः जननिवासः जनाजनमनाः स्मि तेषां निवासः सर्वेषां मनोरमः यद्वा जननी यशोदा तस्यां तदङ्के वासो यस्य ङ्याप्योः क्वचिद्ध्रस्वः नन्वसौ देवकीपुत्र एव कथमेवमुच्यते तत्राह देवकीजन्मवादः देवक्यां जन्मेति वादः प्रसिद्धमात्रं यस्य अजत्वात् न कयापि गर्भे धृतः यद्वा यादवा वरः श्रेष्ठा गोपवालाश्च परिषत् पार्षदरूपा यस्य किं कुर्वन् जयति तैः स्वकीयैर्यादवैर्गोपबालकैश्च दोर्भिरिव दोर्भिः अधर्मं अस्यन् यादवपक्षे अधर्मं असुरशरीरं गोपबालकपक्षे धर्म्मं न अस्यन्

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

स्थापयन्नित्यर्थः । स्थिराणां वृन्दावनतरुगोवर्द्धनादीनां चराणां तद्गतमृगपक्ष्यादीनां, वृजिनघ्नः दुःखघ्नः आनन्दप्रदः द्वारकायामपि रैवतादीनां तद्गतमृगादीनां च पुनः श्रीमुखेन सुस्मितः सन् व्रजरमणीनां गोपीनां पुररमणीनां रुक्मिणीप्रमुखानाञ्च कामदेवं वर्द्धयन् उत्तम्भयन् कामश्चासौ दीव्यतीति तथा अथवा कामेन सङ्कल्पेन दिव्यतीति कामदेवः प्रेमा तं एतेन व्रजविलासद्वारकाविलासयोरेव येगपद्येनैव नित्यत्वं बोद्धव्यं पञ्चरात्रादिषु वसुदेवदेवक्योर्नन्दयशोदयोरुक्मिण्यादीनां गोपगोप्यादीनाञ्च सह पूजाश्रवणात् ॥ ४८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एतादृशोऽपि भगवान् साम्प्रतं क्वास्तीत्याकाङ्क्षायामाह- जयति जननिवास इति । स कृष्णो भगवानिदानीमपि तत्सम्बन्धिजनेषु सर्वेष्वेव जयति सर्वोत्कर्षेण वर्त्तते यतोऽयं जननिवासः स्वभावतोऽपि सर्वेषु जनेषु निवसति परमात्मा सर्वान्तरः ननु देवकीपुत्रं पृच्छामि देवक्यां जातः सः क्व वर्त्तत इति तत्राऽऽह देवकीजन्मवाद इति । देवक्यां जन्मवादमात्रं लोकविवादे सति भगवान् क्वापि नास्तीत्युक्तौ सिद्धान्तनिरूपणप्रस्तावे वीतरागाः देवक्यां जातोऽस्तीत्याहुः-ननु ताव न्मात्ररूपत्वं तस्येत्यर्थः । ननु सर्वत्र किं कुर्वन् तिष्ठतीत्याकाङ्क्षायां तस्य त्रिविधं कर्माह तत्र सात्विकं निरूपयति यदुवराणां परिषदि सभायामपि केवललौकिकपरा अपि ये स्वे स्वकीयाः सेवकाः सन्ति तैरपि अधर्मजातं सर्वमेव दैत्यादिरूपम् अस्यन् क्षिपन् अद्यापि भगवान् द्वारकायां यादवसभायां सेवकैः सह विराजते यदि कश्चिदेतन्मध्ये दैत्यः प्रकटो भवेत् तदा तत एव कञ्चित्प्रेषयित्वा तं मारयतीत्यर्थः । तामसं चरित्रमाह स्थिरचरवृजिनघ्नः इति• द्वारकाव्यतिरिक्तस्थाने सर्वत्रैव यत्रयत्र परिभ्रमणं कृतवान् तेषां सर्वेषामेव प्रसङ्गादपि वृजिनं पापं दूरीकरोति येवा पुरुषा येवा वृक्षाः वृजिनस्यैव वा स्थिरचरभेदौ प्रकारवासनारूपौ अनेन सर्वत्रैव भगवानस्ति यदि भक्तो भवेदिति निरूपितं राजसमाह सुस्मितश्रीमुखेन व्रजपुरवनितानां वर्द्धयन् कामदेवमिति सुस्मितं शोभायुक्तं यन्मुखारविन्दं तेनैव व्रजे गोकुले पुरे मथुरायां द्वारकायां च याः स्त्रियः गोपिका कुब्जाप्रभृतयो महिष्यश्च तासां हृदये कामदेवं वर्द्धयन्नास्ते कामस्य देवत्वं मोक्षपर्यवसानात् योऽस्त्येव सर्वेषु मध्येव वर्द्धयन् स्वसम्बन्धमात्रेणैव मोक्षं प्रयच्छतीत्यर्थः । एषा पूर्वेष्वपि पूर्वं यादृशी तादृश्येवेदानीमपि तथैव तेषु स्थानेषु करोति । अत्रार्थान्तरोऽपि ध्वन्यते अत्यन्तमोहिकया लोके परमसौन्दर्यं प्राप्तया भक्त्या व्रजस्थितानां पुरस्थितानाञ्च ग्रामे ऽप्यद्येव निवसतां काममुद्बोधयन्नास्त इति तस्य देवत्वं मन्तव्यम् ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हन्त हन्तैतादृशः कृष्ण एतावत्कालपर्यन्तं न तद्यावितिमा शोचेत्याह—जयतीति । जनेषु मनुष्येषु तापयादवादमध्येष्वेव निवासो यस्य सः जयति सर्वोत्कर्षेण वर्त्तते वर्त्तमाननिर्देशः सविशेषणस्यैव कृष्णस्य सार्वकालिकीं स्थितिं वक्ति शुकस्य तद्भक्तत्वात् तत्राशीर्वादायोगाल्लोट् प्रयोगो नैवाशङ्क्यः आशीर्वादेऽपि तदाशिषः सार्वत्रिकसत्यत्वाद्विवक्षितसिद्धिरेव देवक्योर्नन्दवसुदेवगृहिण्योर्जन्मैव वादः सिद्धान्तो यत्र सः तथाच द्वेनाम्नीनन्दभार्याया यशोदा देवकीतिचेत्यादिपुराणे देवक्यामिव यशोदायां शुकोक्तेः वादः प्रवदतामहमिति भगवदुक्तिः आरम्भवादपरिणामवादादिष्वपि वादशब्दस्य सिद्धान्तवाचित्वं दृष्टं यदुवरा गोपाः व्रजस्थाः क्षत्रियाः पुरस्थाश्च परिषत् सभारूपा यस्य सः स्वैर्दोर्भिः अधर्मं धर्मप्रतिपक्षमसुरसङ्घं निरस्यन् निघ्नन् दोस्तुल्यैरर्जुनादिभिर्वा अत एव स्थिरचराणां वृजिनं संसारदुःखं व्रजपुरस्थानां तेषां स्ववियोगदुःखञ्च हन्तीति सः व्रजवनितानां पुरवनितानां मथुराद्वारकापुरस्थानुरागिणीनां सुस्मितेन श्रीमता मुखेनैव कामदेवं कामश्चासौ दीव्यतीति देवाऽप्राकृतस्तत्स्वरूपभूतस्तं वर्द्धयन् सन् जयतीति व्रजमथुराद्वारकास्थलीलानां सर्वासामेव दशमस्कन्धवर्णितानां नित्यत्वमुक्तं एतत् प्रकारश्च सप्रमाणकः सर्वं एवोज्वलनीलमणिटीकायां साधु विवृत एव अत्राप्येकादशान्ते भगवदन्तर्धानप्रसङ्गे व्याख्यास्यते एव ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उक्तलीलस्य भगवतो बहुशो वर्णितं परत्वं सङ्क्षेपत आह जयतीति । जनानां सर्वेषां निवासः धारकः तदपि भक्तवश्यश्च देवक्यां जन्मेति वादः कथा यस्य सः यदुवराः परिषत्सभा सेवकरूपा यस्य सः दोर्भिः भुजैः अधर्मं अस्यन् क्षिपन् स्थिराणां चराणां च वृजिनं पापं हन्तीति तथा शोभनं स्मितं यस्मिन् तेन श्रीमता मुखेन व्रजवनितानां पुरवनितानाञ्च दीव्यति विजिगीषति संसारमिति देवः कामश्चासौ देवश्च तं वर्द्धयन् भक्तमनोरथपूरणार्थं तत्तद्भक्तानुगुणाश्चेष्टितं कुर्वन्नित्यर्थः जयत्यतिशयेनोत्कर्षेण वर्त्तते ॥ ४८ ॥

---

भाषाटीका ।

सब प्राणियों में निवास करने वारा देवकी में जन्म भया इस प्रकार का जिस का वाद है यदुवंशियों में श्रेष्ठ जिस के सभासद हैं निज भुजाओं से अधर्म का नाश करने वारा स्थावर जंगम प्राणिमात्र के पापन का नाश करने वारा सुन्दर मंदहास युत श्रीमुख से व्रज की और मथुरा तथा द्वारका पुरी की वनितान को कामदेव की वृद्धि करने वारा अर्थात् भोगद्वारा मोक्ष देने वारो श्रीकृष्ण भगवान् सर्व प्रकार के उत्कर्ष से वर्त्तमान है ॥ ४८ ॥

---

इत्थं परस्य निजवर्त्मरिरक्षयात्त—
लीलातनोस्तदनुरूपविडम्बनानि ॥
कर्माणि कर्मकषणानि यदूत्तमस्य
श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥ ४९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्तत्कार्यविशेषैः स्वीकृतमत्स्यकूर्मादिनानामूर्तेर्विशेषतो यदूत्तमस्य सतः परस्य तदनुरूपानुकारीणि कर्माणि चरितानि श्रूयात् शृणुयादित्यर्थः ॥ ४९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हन्तैतादृशपरधाम्नस्तस्यानुगतिं जनः कथं लभेत उच्यते नेदं मदुक्तं श्रीभगवल्लीलावर्णनशास्त्रं शास्त्रान्तरमिव स्वाभिहितार्थानुष्ठानेनैव फलप्रदं, किन्तु श्रवणमात्रेणापीत्याह—इत्थमिति । यद्वा तेषां तन्नित्यपार्षदानां नित्या तदेकधामस्थितिः किं वर्ण्यतां तैः सह या लीलास्ताः शृण्वतामपि सा नित्यैव स्यादित्याह, इत्थमिति । अनेन पूर्वोक्तप्रकारेण परस्य सर्वागोचरगतेरपि कृपया निजधर्मस्य स्वभक्तिरूपस्य रिरक्षया रिरक्षिषया आत्ता प्रपञ्चं प्रत्यानीता प्रकटिता लीलाप्रधाना तनुर्निजविग्रहो येन तस्य कर्माण्यमुष्य पदयोरनुवृत्तिमनुमतिमिच्छन् जनः शृणुयात् परस्येति विशिनष्टि यदूत्तमस्य पूर्वपूर्वप्रामाण्येन यदुषु पुरस्थेषु व्रजस्थेषु च उत्तमस्य तत्तदाश्रयस्य तस्यैव नित्यलीलस्येति यावत्कर्माणि विशिनष्टि तदनुरूपाणि लीलातनुयोग्यानि च तानि विडम्बनानि अन्यस्यादृश्यासिद्धकर्माणि च तानीति यद्वा तदनुरूपाणि तत्सदृशानि अवतारान्तरकर्माणि तान्यपि विडम्बयन्ति हीनोपमात्वं प्रापयन्ति यानि तानि असमोर्द्ध्ववैभवानीत्यर्थः अत एवोक्तं द्वितीये कर्माणि चात्ममहिमोपनिबन्धनानीति तथा कर्मरूपाण्यपि कर्मकषणानि जगतां कर्मविलोपकानीति ॥ ४९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रस्तुतस्कन्धार्थश्रवणफलं तदधिकारिणञ्चाह—इत्थमिति निजधर्मरिरक्षया स्वनिगमोक्तधर्मरक्षणेच्छया आत्ता परिगृहीता लीलार्थी तनुर्येन लीलापरेण तन्वाः कर्मफलभोगार्थत्वाभावात्तस्य यदूत्तमस्य परमपुरुषस्येत्थम्भूतानि तदनुरूपाणि अवतारानुरूपाणि धर्मरिरक्षानुरूपाणि वा विडम्बनानि मर्त्यचेष्टानुकाराणि कर्मनिरूपाणि शृण्वतां कीर्तयताञ्च भक्तियोगोत्पत्तिमिच्छन् कामयमानः ॥ ४९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

योऽद्यात्मा जगदादिमध्यनिधनो योऽव्यक्तजीवेश्वरो-
यः सृष्ट्वेदमनुप्रविष्ट ऋषिणा चक्रे यतः संहिताम् ॥
यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं यथा-
तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥

जगत आदौ मध्ये निधने वर्त्तत इति जगदादिमध्यनिधनः जगदुत्पत्तिस्थितिसंहारकर्ता अव्यक्तजीवयोरीश्वरः ऋषिणा व्यासात्मना भागवतीं संहितां अनुशयी जीवः यं सम्पद्य प्राप्य अजां बन्धकशक्तिं जहाति "सता सोम्य तदा सम्पन्नो भवतीति श्रुतेः सुप्तः परमात्मानं प्राप्तः प्राप्तः यथा कुलायं शरीराभिमानं त्यक्त्वास्ते तथा कैवल्येन सच्चिदानन्दस्वरूपस्थित्या निरस्तयोनिं नित्यनिरस्तप्रकृतिम् ॥ ख ॥

इत्थं एवम्विधस्य यदूत्तमस्य कर्माणि विक्रमलक्षणानि गाङ्गेदिलन्वयः निजधर्मरिरक्षया स्वकल्पितधर्मरक्षणेच्छया तस्यानुकूलविडम्बनानि कर्मकषणानि दुष्कर्मनिराकरणसमर्थानि अनुवृत्तिं अनुगमनमिच्छन् ॥ ४९ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तेषां नित्यपार्षदानां नित्या तदेकधामस्थितेः किं वर्ण्यतां । यतस्तैः सह या लीलास्ताः शृण्वतामपि सा नित्यैव स्यादित्याह—इत्थमिति । पूर्वप्रकारेण परस्य सर्वगोचरगतेरपि कृपया निजधर्म्मस्य स्वभक्तिस्वरूपस्य रिरक्षिषया आत्ता प्रपञ्चं प्रत्यानीता प्रकटिता लीलाप्रधाना तनुर्निजविग्रहो येन तस्य । तदनुरूपाणि यानि तस्य तत् सदृशानि अवतारान्तर कर्माणि तान्यपि विडम्बयन्ति हीनोपमत्वं प्रापयन्ति यानि तानि असमोर्द्ध्ववैभवानीत्यर्थः । यथा तच्छ्रवणेन तदनुवृत्ति प्राप्तः स्यात्तथा विवृणोति मर्त्यः इति यद्धाम श्रीवृन्दावनादिरूपेषु वासनानुसारेणैकतरं प्राप्नोति ॥ ४९ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

उपसंहरति—इत्थमित्यादि । इत्थं अनेन प्रकारेण नित्यलीलत्वेनेति यावत् यदूत्तमस्य कर्माणि श्रूयात् शृणुयात् निजधर्मरिरक्षया निजधर्मो वैष्णवधर्मस्तस्य रिरक्षया सदैव धर्मरक्षणं कीदृशस्य आत्तलीलातनोः आत्ता गृहीता आलिङ्गिता लीलाया लीलास्वरूपाया राधाया रुक्मिण्याश्च तनुर्येन

मर्त्यस्तयाऽनुसवमेधितया मुकुन्द-
श्रीमत्कथाश्रवणकीर्तनचिन्तयैति ।
तद्धाम दुस्तरकृतान्तजवापवर्गं-
ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥५०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां अष्टादशसहस्रसंहितायां दशमस्कन्धे
महिषीगीतं नाम
नवतितमोऽध्यायः ॥ ९० ॥
समाप्तोऽयं दशमस्कन्धः ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तदनुरूपविडम्बनानि, तस्य लीलायाः अनुरूपमनुकरणं येषां किं कुर्वन् शृणुयात् अमुष्य श्रीकृष्णस्य पदयोरनुवृत्तिं परिचर्य्याम् इच्छन् ॥ ४९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं चरित्रमुपपाद्य तत्र शुकः श्रवणादिकं विधत्ते नित्यत्वाय, इत्थं परस्येति पूर्वोक्त प्रकारापन्नं अन्यदपि भगवच्चरित्रं इत्थमित्यनेन परिगृह्यते अक्षरादपि परः निजधर्मा ये भक्तास्तेषां रिरक्षया आत्ता लीलातनुर्येन तादृशस्य परमकृपालोस्तदनुरूपविडम्बनानि यथासाध्यानुरूपतया लोकप्रकारं विडम्बयन्ति यानि कर्माणि भोजनशयनादीन्यपि तानि शृणुयादिति विधिः अश्रवणे प्रत्यवाय इत्यर्थः यद्यप्यवतारान्तरचरित्रमपि पापनिवर्त्तकं भवति तथापि यदूत्तमस्य शृणुयात् को विशेष इति चेत्तत्राह अमुष्यपदयोरनुवृत्तिमिच्छन्निति कृष्णचरणारविन्दयोश्चेदनुवृत्तिं वाञ्छति तदेतदेव श्रोतव्यमित्यर्थः ॥ ४९ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कृष्णचरितस्य नित्यतां व्यवस्थाप्य तच्छ्रवणं विधत्ते इत्थमिति । निजधर्मो भक्तिधर्मस्तस्य रिरक्षिषया प्रकल्पितलीलामयतनोस्तदनुरूपाणि तत्सदृशानि यान्यवतारान्तरकर्माणि तान्यपि विडम्बयन्ति स्वस्मादतिहीनीकुर्वन्ति कर्माणि ब्रूयात् शृणुयात् कर्षकषणानि नैष्कर्म्यप्रतिपादकानि ॥ ४९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

परस्य सर्वश्रेष्ठस्य निजधर्मस्य स्वप्रापकस्य धर्मस्य भक्तेः रक्षितुमिच्छया अत्ता प्रकटीकृता लीलार्था तनुः श्रीमूर्तिर्येन तस्य तदनुरूपाणि लीलानुरूपाणि वा विडम्बनानि नरचेष्टितानुकरणानि येषु तानि ब्रूयात् शृणुयात् किं कुर्वन् अमुष्य श्रीकृष्णस्य पदयोः अनुवृत्तिमिच्छन् ॥ ४९ ॥

भाषा टीका ।

निजवेद मार्ग की रक्षा करने की इच्छासे लीलावतार तनूका ग्रहण करने वारे ब्रह्मादिक देवतानसे परें उस यदुत्तम श्रीकृष्ण के चरणों की परिचर्य्या की इच्छा करने वारा उस परमेश्वर के अवतारके अनुरूप चेष्टा के अनुकार करने वारे और संसार बन्धकर्मनके निवृत्त करने वारे चरित्रन को नित्य प्रति श्रवण करना ॥ ४९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुवृत्तेः फलमाह—मर्त्यं इति । श्रीमत्याः कथायाः श्रवणकीर्तनयुक्तया चिन्तया सम्वर्धितयाऽनुवृत्या तया तन्निष्ठत्वेन तस्य धाम लोकमेति लोकत्वेऽपि कालानाकलितत्वमित्याह, दुस्तरेति । दुर्लभपुरुषार्थतामाह, ग्रामादिति ॥ ५० ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिकृतभावार्थ दीपिका व्याख्या टीकायां
नवतितमोऽध्यायः ॥ ९० ॥
समाप्तोऽयं दशमस्कन्धः ।
हरिः ओम् ।
श्रीकृष्णाय नमो नमः ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तथा तच्छ्रवणेन सदनुवृत्तिप्राप्तिः स्यात्तथा विवृणोति—मर्त्य इति । ननु हे राजन् ! मर्त्यो मरणधर्मा यः कोपि तया पूर्वोक्तमाहात्म्यया मुकुन्दश्रीमत्कथाश्रवणकीर्तनचिन्त्वया मुकुन्दस्य सर्वदुःखविमोचकत्वेन महाकारुणिकस्य स्वयं भगवतो या श्री-मती सर्वसम्पदां धात्रीच कथा तस्याः श्रवणेन जातं यत्की-र्तनं स्वयमुल्लासतो गानं तत्र या चिन्ता तत्प्राप्त्युत्कण्ठामयी स्मृतिस्तया समेधितया नित्यमेव तेन गानेन वर्द्धितया सम्यक् पूर्वोक्तं श्रीवृन्दावनादिप्रकाशविशेषरूपं तद्धाम प्रति वासना-नुसारेण तदेकतरं प्राप्नोति तदेव विशिनष्टि—दुस्तरः ब्रह्मा-दिभिरपि स्वतोऽपरिहार्य्योयः कृतान्तः कृतः सर्वस्यान्तो येन स कालः तस्यापि जवस्य विक्रमस्य अपवर्गः समाप्तिर्यत्र तत् यदुक्तं "न यत्र माया न च कालविक्रमः" इति "दर्शयामास लोकं स्वं गोपानां तमसः परम्" इतिच तच्च परमाविषयाऽन्धाना-मपि लोभनीयशोभं किमुत मुमुक्षुमुक्तभक्तानामुत्तरोत्तरपरम-स्थमित्याह—ग्रामादिति । क्षितिः सप्तद्वीपवती पृथ्वी तां भुञ्जते ये तेपि बहवो यदेव परमपुरुषार्थो येषां तथाभूताः सन्तो ग्रामात् अन्यसर्वारोचकतया जनस्थानमात्रं त्यक्त्वा वनं जन-मात्रशून्यप्रदेशं साम्यवशात् द्वादशवनात्मकं श्रीमथुरामण्डलं वा ययुः तत्र गत्वा नित्यमवसन् श्रीमन्मथुरामण्डलस्यैव परमसाधनसाध्यरूपत्वात् तथा हि आदिवाराहे—

> न पापेभ्यो सुखं यत्र न भयं यत्र वै यमात् ।
> न गर्भवासमीयेत्र यत्र वै को न संश्रयेत् ॥
>
> मथुरां च परित्यज्य योऽन्यत्र कुरुते रतिम् ।
> मूढो भ्रमति संसारे मम माया विमोहितः ॥ इति

किञ्च स्कान्दे—

> तन्मण्डलं माथुरं हि विष्णुचक्रोपरि स्थितम् ।
> पद्माकारं सदा तत्र वर्त्तते शाश्वतं नृप ॥ इति

किञ्च वाराहे—

> लाभानां मथुरालाभो ज्ञानानां ज्ञानमुत्तमम् ।
> प्रीतीनां परमा प्रीतिर्गतीनाञ्चगतिरुत्तमः ॥ इति

अत एवोक्तं पाद्मपातालखण्डे अहोमधुपुरी धन्या वैकुण्ठाच्च गरीयसीत्यादि ॥ ९० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम् नवतितमोऽध्यायः ॥ ९० ॥

समाप्तोऽयं दशमस्कन्धः ।

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

> मर्त्यस्तयानुसवमेधितया मुकुन्द
> श्रीमत्कथा श्रवणवर्णनचिन्तयेति ।
> तद्धाम दुस्त्यजकृतान्तजवापवर्ग
> ग्रामाद्वनं क्षितिभुजोपि ययुर्यदर्थाः ॥

यद्वा यस्य भगवान् अभयदर्शी मनुष्यभावे ईश्वरत्वस्य पश्यन्तीनां अनुसवं अनुसन्ध्यं दुस्तरकृतान्तजवापवर्गी दुस्तरः कृतान्तो येषां तेषां जनानां दुःखापवर्गहेतुं धाम स्थानम् ॥

> चित्रं न चैतदुरुगायपवित्रलीला-
> विष्वक्त्वकल्मषकदम्बकमुक्तिरूपम् ॥
> स्त्रीणां सुदुस्त्यजकृतान्तजवापवर्गं
> ग्रामाद्वनं क्षितिभुजोपि ययुर्यदर्थाः ॥

इति श्रीहारीतकुलतिलक वाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्ध वेदव्यासापरनामधेय श्रीसुदर्शन सूरिणाभिहिते श्रीमद्भागवतमहापुराणे व्याख्याने श्रीशुकपक्षीये दशमस्कन्धे नवतितमोऽध्यायः ॥ ९० ॥

श्रीमते रामानुजाय नमः ।

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु किमनुवृत्तेरित्यत आह—मर्त्य इति । अनुसवमनुसन्ध्यं मुकुन्दस्य श्रीमत्याः कथायाः श्रवणकीर्तनचिन्तया श्रवणकीर्तन-युक्ता या चिन्ता तया समेधितयाऽनुवृत्त्या दुस्तरकृतान्तजवाप-वर्गं दुस्तरः कृतान्तो यैस्तेषां जनानामपवर्गे दुःखावसानहेतुभूतं तस्य भगवतो धाम स्थानमेति प्राप्नोति दुस्तरेत्यादि-विशेषणेन दुर्लभत्वं सूचितं तत्स्पष्टमेवाह—ग्रामादिति । यदर्थाः यद्धाम अर्थः प्रयोजनं येषां ते यद्धामप्राप्तिकामा इत्यर्थः । ग्रामाद्वनं ययुः यान्ति तपसे इति शेषः यद्वा, यदनुवृत्ति-कामाः दुस्त्यजकृतान्तभवापवर्गमिति पाठान्तरं दुस्तरः कृतान्तो मृत्युस्तत्तुल्यो भवः संसारः तस्यापवर्गो ऽवसानं यस्मात्तद्धाम एतीति सम्बन्धः ॥९०॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः श्रीशैलगुरोस्तनयेन तच्चरणकमलपरिचर्याप्रसादतत्सप्राप्तसमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवीरराघवविदुषा विलिखितायां श्रीमद्भागवतचन्द्रचन्द्रिकायां श्रीमद्भागवतव्याख्यायां दशमस्कन्धे नवतितमोऽध्यायः॥९०॥

> विभुर्विजयतेतरां विविधविश्वजन्मोदय
> स्थितिप्रभृतिनोदयोनिरवधिस्वरूपःस्वतः ।
> निरस्तनिखिलाशुभः सकलशोभनोपाश्रय-
> श्रियः सहचरः पुमान् श्रुतिदशास्मनोज्ञाकृतिः ॥
>
> त्वाम्यन्त्वातिक्रमन्त्वत्र शब्दार्थविषयं मम ।
> निर्मत्सराः सुमनसो गुणान् गृह्णन्तु सर्वशः ॥

समाप्तोऽयं दशमस्कन्धः ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मर्त्य तयाऽनुवृत्त्या तस्य हरेर्धाम लोकमेति कीदृश्या श्रीमत्याः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कथायाः श्रवणकीर्तनचिन्तनलक्षणया दुष्करेण तपसा कृतं साधितं जनतायाः क्रियासङ्क्षयफलरूपं जनतापवर्गं यस्य हरेर्येषामर्थे क्षितिभुजोपि ग्रामाद्वनं ग्रामं विहाय वनं ययुः यान्ति किंपुबरन्य इति ॥ ५० ॥

सूत उवाच ।

य इदमनुशृणोति श्रावयेद्वा मुरारे—
श्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ।
जगदघभिदलं तद्भक्तकर्णावतंसं—
भगवति कृतचित्तो याति तत्क्षेमधाम ॥

स्कन्धार्थमुपसंहरति य इदमिति। व्यासपुत्रैः शुकादिभिः जगतो ऽघं पापं भिनत्तीति जगदघभित् तद्भक्तानां कर्णालङ्कारायमाणं श्रवणादिफलमाह भगवतीति क्षेमधाम मोक्षलक्षणं स्थानं श्रवणादिकुर्वता इत्थं भाव्यमित्यत उक्तं भवतीति—

सर्वात्मनोपि भगवान् गुणभावं जनार्दनः ।
दर्शयेद्वाक्षुद्रोषोपि आत्मनो जीवतामपि ॥
अज्ञाताकावसावस्तु कुतस्तस्याखिलेशितुः ।
कुतश्च जीवता तस्य प्रधानपुरुषेशितुः ॥
कुतो दोषाः सर्वगुणपूर्णस्यानन्दवारिधेः" ।

इत्येतद् प्रमाणम भक्तजनेन कृष्णे क्रियमाणसर्वशङ्कानिराकरणार्थं भगवत्पादैः स्कन्धान्तेः दर्शितमिति ज्ञातव्यमिति—

योऽस्याचि त्रिदशैः कुमारहतवेधातारि येन स्थिती—
उद्धे येन सुरासुहृत्समुदयो येन त्रिलोक्यपि सा ॥
येनाज्ञायि युधिष्ठिरो निजपदे धर्मोपि येनांकुरि ।
श्रीकृष्णं तमकृष्णकृष्णदयितं वन्दामहे सन्ततम् ॥
पदरत्नावलिर्मद्दशमस्कन्धसङ्गता ।
कृष्णप्रीत्या समाप्तेयं विद्वन्मानसहर्षिणी ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
नवतितमोऽध्यायः ॥ ९० ॥
( श्रीविजयध्वजतीर्थरीत्या त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ )
समाप्तोऽयं दशमस्कन्धः ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

तदेव विधिनष्टि सुदुस्तरेण ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
नवतितमोऽध्यायः ॥ ९० ॥
समाप्तोऽयं दशमस्कन्धः ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननु तस्यानुप्राप्तिस्तद्धामलब्धैव स्यात् सा कथं भवेत् मर्त्यानामित्याह मर्त्यैः इत्यादि ननु भो राजन् भो राजन् मर्त्योपि तया पूर्वोक्तया समेधितया वर्धमानया मुकुन्दश्रीमत्कथायाः श्रवणे यावितां तया तद्धाम तन्निवासं परमवैकुण्ठं इति दुस्तरो यः कृतान्तजवः कालवेगस्तस्यापवर्गो यस्मात् यदर्था यत्प्राप्तिकामाः ग्रामात् निजराज्यतः क्षितिभुजोपि वनं ययुः तद्यत्र तत्र स्थित्वा तत्कथाश्रवणेनैव भवतीति भावः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
नवतितमोऽध्यायः ॥ ९० ॥
समाप्तोऽयं दशमस्कन्धः ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वेवं नित्यतया श्रवणे चरणानुवृत्तौ वा किं भविष्यतीत्याकाङ्क्षायामाह—मर्त्यस्तयेति । तया चरणानुवृत्त्या मरणधर्माप्ययं पुरुषः तेनैव शरीरेण तद्धाम इति । ननु तदानीमेव तस्य वैकुण्ठगमनं नोपलभ्यत इति चेत्तत्राह—तनुसमेधितश्चेति तनु अल्पं अल्पं समेधितया तैलधारावदच्छिन्नश्रवणादिभिः क्रमेण यदा पुष्टा भवति तनौ शरीरे वा समेधिता नन्विति पाठे अप्रसारणार्थं सम्बोधनं तस्या अनुवृत्तेः पोषार्थं त्रीण्यङ्गानि निरूपयति श्रीमत्कथायाः श्रवणं कीर्तनं चिन्ता च यस्यामिति श्रीमदित्यनेन पामराणां वक्तुमजानतां सम्बन्धिनी कथा व्यावर्तिता भगवद्धाम्नः सर्वोत्कृष्टफलत्वाय विशेषणमाह— दुस्तरकृतान्तजवापवर्गमिति दुस्तरः सर्वप्रकारैरपि निराकर्तुमशक्यः कृतान्तस्य जवस्य वेगस्य मारणार्थं धावनरूपस्य अपवर्गं समाप्तिर्यत्र मृत्युस्तावदेव धावति यावदक्षरं अक्षरपर्यन्तमेव कालनिरूपणात् तेनाक्षरात्मकं व्यापिवैकुण्ठं यातीत्यर्थः । एतत्फलं ज्ञानमार्गेपि दुर्लभमिति ज्ञापयितुमाह—ग्रामाद्वनं क्षितिभुजोपि ययुर्यदर्था इति । पूर्वं क्षितिभुजः राज्ये स्थित्वा राज्यपरिपालनधर्मेण परिपक्वाः सन्तः नगरादिकं विहाय ग्रामे कलापग्रामादौ ज्ञाननिष्ठाः सन्तः तिष्ठन्ति ततोपि भगवन्माहात्म्यवेगेन तदपि विहाय वनं सर्वं गूढ स्थानं ययुरित्यर्थः । ग्रामशब्दो ग्राम्यपरो वा यस्य श्रवणमात्रमेव राज्यापेक्षयापि सर्वोत्कृष्टं अन्यथा क्षितिं विहाय कथं ते विवेकिनः वनं गच्छेयुः यदेव एवं अर्थः पुरुषार्थो येषां ते यदर्थाः ॥ ५० ॥

इत्येवं दशमस्कन्धे सङ्क्षेपेणाल्पलेशतः ।
अर्थो मयातियत्नेन स्वभावेन निरूपितः ॥
अनेकयुक्तिसन्दर्भमालाकारेण योजितः ।
कृष्णपादाम्बुजे न्यस्तो वाक्पुष्पाञ्जलिरुज्ज्वलः ॥
सिद्धान्ताः सकलागमाब्धिविततः लोकैर्धुना सर्वतः—
स्ते प्रायेण निरूपिताः सुबहुशो भक्त्यै मुकुन्दाश्रये ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

विस्तारस्तु गुणाय कृष्णचरणे चित्तं भवेद्विस्तृतम्-
तेनाहं हृदयस्थितेन हरिणा यावद्यथा रूपितम् ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभ
दीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धविवरणे
एकचत्वारिंशाध्यायविवरणम् ॥ ४१ ॥ ९० ॥

समाप्तोऽयं दशमस्कधः ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अनुवृत्तेः फलमाह—तया अनुवृत्त्या तद्धाम प्रति कीदृश्या श्रीमत्कथाश्रवणकीर्त्तनाभ्यां जनिता चिन्ता केन प्रकारेण कदावा कृष्णं प्राप्स्यामीति या भावना तया एधितया। वर्द्धितया. धाम्नः कालानाकलितत्वमाह। दुस्तरो यः कृतान्तजवस्तस्यापवर्गो नाशो यत्र तत् तत्प्राप्तिप्रकारमपि कमप्याह प्रामादिति क्षितिभुजो मनुप्रयिवृताद्याअपि ॥ ५० ॥

नवतितमोऽत्राध्यायोदशमे सारार्थदर्शिन्याम।
सङ्गतएष स्कन्धोप्यस्तु सतां सङ्गतो हृदिमे ॥ ९० ॥
मद्भवीरपि गोपालः स्वीकुर्यात् कृपया यदि।
तदैवासां पयःपीत्वा हृष्येयुस्तत् प्रियाजनाः ॥

माघस्य कृष्णद्वादश्यां राधाकृष्णसरित्तटे।
दशमस्कन्धटीकेयमपूरिकृपयाप्रभो ॥
समाप्तोऽयं दशमस्कन्धः ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

किं तयेत्याकाङ्क्षायामाह मर्त्यस्तयेति। मर्त्यः तया अनुवृत्त्या तस्य श्रीकृष्णधाम लोकमेति कीदृशं धाम दुस्तरस्य कृतान्तजवस्य मृत्युवेगस्य अपवर्गः नाशः अभावो यस्मिन् तत् कथम्भूतया मुकुन्दश्रीमत्कथाश्रवणकीर्तनचिन्तया अनुसवमेधितया अनुसन्ध्यं वर्द्धितया यद्वा अनुवृत्तिकामाः ॥ ५० ॥

श्रीकृष्णप्रीतये सम्यक् शुकेन सुधिया कृतः।
सम्प्रदायानुसारेण प्रदीपो दशमेऽर्थदः ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमन्निम्बार्कचरणचिन्तक श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
नवतितमाध्यायार्थप्रकाशः ॥ ९० ॥

श्रीमन्निम्बार्काय नमः।
समाप्तोऽयं दशमस्कन्धः ॥

---

भाषाटीका।

नित्य प्रति वृद्धि को प्राप्त भई मुकुन्दकी श्रीयुत कथा के श्रवण कीर्त्तन की उस चिन्ता से हि मनुष्य श्रीकृष्ण के धाम को प्राप्त होजाता वह धाम कैसा है कि दुस्तर काल के वेग की वहां निवृति है अर्थात वहां कालका पराक्रम नहिं चलता वह धाम हि जिन को प्रयोजन है ऐसे चक्र वर्त्ति राजा श्रीराज्यादिकों का परित्याग कर ग्राम सेवन को चले गए रहे ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्द्ध में नव्वे अध्याय की
भाषाटीका समाप्त ॥ ९० ॥
दशमस्कन्धसमाप्तभया ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे नवतितमोऽध्यायः ॥ ९० ॥

---

## समाप्तोऽयं दशमस्कन्धः॥१०॥

॥*॥श्रीः॥*॥

श्रीश्रीराधारमणो जयति ।

# श्रील सनातनरूपजीवाना परिचयः ।

## श्लोकः ।

श्रीमच्चैतन्यरूपस्य प्रीत्यै भगवतः कृता ।
टिप्पणी दशमस्कन्धे पूर्णा वैष्णवतोषणी ॥

जयश्रीराधेकृष्णजयजय ———

ये श्रीभागवतं प्राप्य स्वप्ने प्राडुश्च जागरे ।
स्वयं इष्टादेवाविपात्प्रथमे वयसि स्थिताः ॥

ममज्जुः श्रीभागवतप्रेमामृतमहांबुधौ ।
तेषामेव हि लेखोयं श्रीसनातननामिनाम् ॥

तदेतद्विनिवद्धापि किञ्चिदन्यद्विवक्षया
अथो तदङ्घ्रिजीवेन जीवेनेद निवेद्यते ॥

उच्चैश्चारुपदक्रमाश्रितवती यस्यामृतस्राविणी
जिह्वाकल्पलता श्रथीमधुकरी भूयो नरीनृत्यत ॥

रेजे राजसभासभाजितपदः कर्णाटभूमीपतिः-
श्रीसर्वज्ञजगद्गुरुर्भुवि भरद्वाजान्वयग्रामणीः ॥

पुत्रस्तस्य नृपस्य कश्यपतुलामारोहतोरोहिणी-
कान्तस्पर्द्धियशोभरःसुरपतेस्तुल्यप्रभावो भवत् ।

सर्वक्ष्मापतिपूजितोऽखिलयजुर्वेदैकविश्रामभू-
र्लक्ष्मीवाननिरुद्धदेव इति यः ख्यातिं क्षितौ जग्मिवान् ॥

महिष्यां भूपस्य प्रथितयशसस्तस्य तनयौ
प्रजज्ञाते रूपेश्वरहरिहराख्यौ गुणनिधी ।

तयोराद्यः शास्त्रे प्रबलतरभावं बहुविधे
जगामान्यः शास्त्रे निजनिजगुणप्रेरिततया ॥

विभज्य स्वं राज्यं मरुशिखपुरप्रस्थितिदिने
पिता ताभ्यां रूपेश्वरहरिहराभ्यां किल ददौ ।

निजज्येष्ठं रूपेश्वरमथ कनिष्ठो हरिहरः
स्वराज्याद्यार्णाकुलतिलकमभ्रंशयदसौ ॥

श्रीरूपेश्वरदेव एवमरिभिर्निर्धूतराज्यः क्रमा-
दृष्टाभिस्तुरगैः समं दयितया पौरस्त्यदेशं ययौ ।

तत्रासौ शिखरेश्वरस्य विषये सख्युः सुखं सम्वस-
न्धन्यः पुनमजीजनद्गुणनिधिं श्रीपद्मनाभाभिधम् ॥

यजुर्वेदः साङ्गोविततिरपि सर्वोपनिषदाम्
रसज्ञायां यस्य स्फुटमघटयत्ताण्डवकलाम् ।

जगन्नाथप्रेमोल्लसितहृदयः वर्णपदवीं
मयातः केषाख्या सकिलनृपरूपेश्वरसुतः ॥

विहाय गुणिशेखरः शिखरभूमिवासस्पृहां
स्फुरत्सुरतरङ्गिणीतटनिवासपर्य्युत्सुकः ।

ततोदनुजमर्द्दनक्षितिपपूज्यपाद क्रमा-
दुवासनवहट्टके स किलपद्मनाभः कृती ॥

मूर्त्तिं श्रीपुरुषोत्तमस्य यजतस्तत्रैव सत्रोत्सवैः
कन्याष्टादशकेन सार्द्धमभवन्नेतस्य पञ्चात्मजाः ।

तत्राद्यः पुरुषोत्तमः खलु जगन्नाथश्च नारायणो
धीरः श्रीलमुरारिरुत्तमगुणः श्रीमान् मुकुन्दः कृती ॥

जातस्तत्र मुकुन्दतो द्विजवरः श्रीमान् कुमाराभिधः
कश्चिद्द्रोहमवाप्य सत्कुलजनिर्वङ्गालयं सङ्गतः ।

तत्पुत्रेषु महिष्ठवैष्णवगणप्रेष्ठास्त्रयो जज्ञिरे
ये स्वम् गोत्रममुत्र चेह च पुनश्चक्रुस्तरामर्चितम् ॥

आदिः श्रीलसनातनस्तदनुजः श्रीरूपनामा ततः
श्रीमद्वल्लभनामधेयवलितो निर्विद्यते राज्यतः ।

आसाद्यातिकृपां ततो भगवतः श्रीकृष्णचैतन्यतः
साम्राज्यं खलु भेजिरे मुरहरप्रेमाख्यभक्तिश्रियि ॥

यः सर्वावरजः पिता मम सतो श्रीराममासेदिवान्
गङ्गायां द्रुतमग्रजौ पुनरमू वृन्दावनं सङ्गतौ ।

याभ्यां माथुरगुप्ततीर्थनिवहो व्यक्तीकृतो भक्ति-
रप्युच्चैः श्रीव्रजराजनन्दनगता सर्वत्र सञ्चर्चिता ॥

यन्मित्रं रघुनाथदास इति विख्यातः क्षितौ राधिका-
कृष्णप्रेममहार्णवोर्म्मिनिवहघूर्णन्सदादीव्यति ॥

दृष्टान्तप्रकरप्रभाभरमतीत्यैवानयोर्भ्राजतो-
र्यस्तुल्यत्वपदं मतस्त्रिभुवने साश्चर्यमाभ्यां समैः ॥

गोपालबालकव्याजाद्ययोः साक्षात्प्रभूरह ।
साक्षाच्छ्रीयुतगोपालः क्षीराहरणलीलया ॥

तयो रत्वजरच्छेषु काव्यं श्रीहंसदूतकम् ।
श्रीमदुद्धवसन्देशश्छन्दोष्टादशकं तथा ॥

स्तवाश्चोत्कलिकावल्ली गोविन्दविरुदावली ।
प्रेमेन्दुसागराद्याश्च बहवः सुप्रतिष्ठिताः ॥

विदग्धललिताद्यमाधवं नाटकद्वयम् ।
भाणि कानानकेलयाह्वा रसामृतयुगं पुनः ॥

मथुरा महिमा पद्यावली नाटकचन्द्रिका ।
सङ्क्षिप्त श्रीभागवतामृतमेते च सत्प्रदाः ॥

